त्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गम
त्येप देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्त
(छा० ४।१५।५) इति । तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्या
स्थानस्य ब्रह्मत्वं निश्चीयते ॥ १६ ॥

### अनवस्थितेरसंभवाच्च नेतरः ॥ १७ ॥

यत्पुनरुक्तं छायात्मा, विज्ञानात्मा, देवतात्मा वा स्यादक्षिस्थ
इति । अत्रोच्यते—न छायात्मादिरितर इह ग्रहणमर्हति । कस्मात्
अनवस्थितेः । न तावच्छायात्मनश्चक्षुपि नित्यमवस्थानं संभवति
यदैव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुपि पुरुपच्छाया दृश्य
अपगते तस्मिन्न दृश्यते । 'य एपोऽक्षिणि पुरुपः' इति च श्रुतिः सं
धानात्स्वचक्षुपि दृश्यमानं पुरुपमुपास्यत्वेनोपदिशति । नचोपासना
छायाकरं कंचित्पुरुपं चक्षुःसमीपे संनिधाप्योपास्त इति युक्तं कल्प
तुम् । 'अस्यैव[2] शरीरस्य नाशमन्वेप नश्यति' (छा० ८।९।१)
श्रुतिश्छायात्मनोऽप्यनवस्थितत्वं दर्शयति । असंभवाच्च तस्मिन्न
त्वादीनां गुणानां न छायात्मनि प्रतीतिः । तथा विज्ञानात्मनो
साधारणे कृत्स्नशरीरेन्द्रियसंवन्धे सति चक्षुष्येवावस्थितत्वं वक्तुं
शक्यम् । ब्रह्मणस्तु व्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेश
पसंवन्धः । समानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानामसंभव
यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव, तथाप्यविद्याकामकर्मकृतं
स्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यमृतत्वाभयत्वे नोपपद्येते । संयद्वामत्व
यश्चैतस्मिन्नैश्वर्यादनुपपन्ना एव । देवतात्मनस्तु 'रश्मिभिरेपोऽस्मिन्
ष्ठितः' इति श्रुतेर्यद्यपि चक्षुष्यवस्थानं स्यात्तथाप्यात्मत्वं तावन्न संभव
पराग्[3]रूपत्वात् । अमृतत्वादयोऽपि न संभवन्ति, उत्पत्तिप्रलयश्रवणा
अमरत्वमपि देवानां चिरकालावस्थानापेक्षम् । ऐश्वर्यमपि परमेश्वर
न स्वाभाविकम् । 'भीषा[4]स्माद्वातः पवते भीषोदेति सूर्यः । भीषा

---

१ मानवं मनोः सर्गं, आवर्तं जन्ममरणाद्यावृत्तियुक्तम् । २ अस्य छाया
विम्वस्य । ३ पराक् वाह्यं जगत् । ४ भीषा भयेन, अस्मात् ब्रह्मणः, पवते
उत्कापेक्षया पञ्चमो मृत्युः समाप्तायुषां निकटे धावतीत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' (तै० २।८) इति मन्त्रवर्णात् । तस्मात्परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः । अस्मिंश्च पक्षे दृश्यत इति प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयम् ॥ १७ ॥

५ अन्तर्याम्यधिकरणम् । सू० १८–२०

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युपक्रम्य श्रूयते—'यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः' ( बृह० ३।७।१,२ ) इत्यादि । अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते । स किमधिदैवाद्यभिमानी देवतात्मा कश्चित्किंवा प्राप्ताणिमाद्यैश्वर्यः कश्चियोगी किंवा परमात्मा किंवार्थान्तरं किंचिदित्यपूर्वसंज्ञादर्शनात्संशयः । किं तावन्नः प्रतिभाति, संज्ञाया अप्रसिद्धत्वात्संज्ञिनोऽप्यप्रसिद्धेनार्थान्तरेण केनचिद्भवितव्यमिति । अथवा नानिरूपितरूपमर्थान्तरं शक्यमस्त्यभ्युपगन्तुम् । अन्तर्यामिशब्दश्चान्तर्यमनयोगेन प्रवृत्तो नात्यन्तमप्रसिद्धः । तस्मात्पृथिव्याद्यभिमानी कश्चिद्देवोऽन्तर्यामी स्यात् । तथाच श्रूयते—'पृथिव्येव यस्यायतनमग्निर्लोको मनो ज्योतिः' ( बृ० ३।९।१० ) इत्यादि । स च कार्यकरणवत्त्वात्पृथिव्यादीनन्तस्तिष्ठन्यमयतीति युक्तं देवतात्मनो यमयितृत्वम् । योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयितृत्वं स्यात्, नतु परमात्मा प्रतीयेत, अकार्यकरणत्वादित्येवं प्राप्त इदमुच्यते—योऽन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्य इति । कुतः, तद्धर्मव्यपदेशात् । तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृश्यन्ते । पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमन्तस्तिष्ठन्यमयतीति परमात्मनो यमयितृत्वं धर्म उपपद्यते । सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः । 'एष त आत्माऽन्तर्याम्यमृतः' इति चात्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते । 'यं पृथिवी न वेद' इति

१ आयतनं शरीरं, लोक्यतेऽनेनेति लोकश्चक्षुः, ज्योतिर्मनः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च पृथिवीदेवताया अविज्ञेयमन्तर्यामिणं ब्रुवन्देवतात्मनोऽन्यमन्तर्यामि दर्शयति । 'पृथिवी देवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात् तथा 'अदृष्टोऽश्रुतः' इत्यादिव्यपदेशो रूपादिविहीनत्वात्परमात्मन उप पद्यत इति । यत्त्वकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्यत इति नैष दोषः । यन्नियच्छति तत्कार्यकरणैरेव, तस्य कार्यकरणवत्त्वोपपत्तेः तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न संभवति, भेदाभावात् । भेदे सत्यनवस्थादोषोपपत्तिः । तस्मात्परमात्मैवान्तर्यामी ॥ १८ ॥

## नच स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

स्यादेतत् । अदृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्या प्युपपद्यन्ते, रूपादिहीनतया तस्य तैरभ्युपगमात् । 'अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः' ( मनु० १।५ ) इति हि स्मरन्ति, तस्यापि नियन्तृत्वं सर्वविकारकारणत्वादुपपद्यते । तस्मात्प्रधानमन्तर्यामिशब्दं स्यात् 'ईक्षतेर्नाशब्दम्' ( ब्र० १।१।५ ) इत्यत्र निराकृतमपि सत्प्रधानमिह दृष्टत्वादिव्यपदेशसंभवेन पुनराशङ्क्यते । अत उत्तरमुच्यते—नच स्मार्तं प्रधानमन्तर्यामिशब्दं भवितुमर्हति । कस्मात्, अतद्धर्माभिलापात् । यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति, तथापि न द्रष्टृत्वादिव्य पदेशः संभवति, प्रधानस्याचेतनत्वेन तैरभ्युपगमात् । 'अदृष्टो द्रष्टा ऽश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञाता' ( बृह० ३।७।२३ ) इति वाक्यशेष इह भवति । आत्मत्वमपि न प्रधानस्योपपद्यते ॥ १९ ॥

यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसंभवान्नान्तर्याम्यभ्युपगम्यते, शारीर स्तर्ह्यन्तर्यामी भवतु । शारीरो हि चेतनत्वाद्द्रष्टा श्रोता मन्ता विज्ञाता च भवति, आत्मा च प्रत्यक्त्वात् । अमृतश्च[1], धर्माधर्मफलोपभोगोपपत्तेः अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः दर्शनादिक्रियायाः कर्तरि[2] प्रवृ

१ अमृतश्चेति विनाशिनो देहान्तरभोगानुपपत्तेरित्यर्थः । २ कर्तरीति क्रियायां कर्ता, प्रधानं कर्म, तत्रैकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान् कर्मत्वमित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विरोधात्। 'न दृष्टेर्द्रष्टारं पश्येः' ( बृ० ३।४।२ ) इत्यादिश्रुतिभ्यश्च। तस्य च कार्यकरणसंघातमन्तर्यमयितुं शीलं, भोक्तृत्वात्। तस्माच्छारीरोऽन्तर्यामीत्यत उत्तरं पठति—

**शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ २० ॥**

नेति पूर्वसूत्रादनुवर्तते। शारीरश्च नान्तर्यामीष्यते। कस्मात्। यद्यपि द्रष्टृत्वादयो धर्मास्तस्य संभवन्ति तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वान्न कार्त्स्न्येन पृथिव्यादिष्वन्तरवस्थातुं नियन्तुं च शक्नोति। अपि-चोभयेऽपि हि शाखिनः काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते—'यो विज्ञाने तिष्ठन्' ( बृ० ३।७।२२ ) इति काण्वाः। 'य आत्मनि तिष्ठन्' इति माध्यंदिनाः। 'य आत्मनि तिष्ठन्' इत्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः। 'यो विज्ञाने तिष्ठन्' इत्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते। विज्ञानमयो हि शारीरः। तस्माच्छारीरादन्य ईश्वरोऽन्तर्यामीति सिद्धम्। कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते, यश्चायमीश्वरोऽन्तर्यामी, यश्चायमितरः शारीरः। का पुनरिहानुपपत्तिः। 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिवचनं विरुध्येत। अत्र हि प्रकृतादन्तर्यामिणोऽन्यं द्रष्टारं, श्रोतारं, मन्तारं, विज्ञातारं चात्मानं प्रतिषेधति। नियन्त्रन्तरप्रतिषेधार्थमेतद्वचनमितिचेत्, न, नियन्त्रन्तराप्रसङ्गादविशेषश्रवणाच्च। अत्रोच्यते—अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः। एको हि प्रत्यगात्मा भवति, न द्वौ प्रत्यगात्मानौ संभवतः। एकस्यैव तु भेदव्यवहार उपाधिकृतो यथा घटाकाशो महाकाश इति। ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषेधशास्त्रं चेति सर्वमेतदुपपद्यते। तथाच श्रुतिः—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इत्यविद्याविषये सर्वं व्यवहारं दर्शयति। 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' इति विद्याविषये सर्वं व्यवहारं वारयति ॥ २० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ६ अदृश्यत्वाधिकरणम्। सू० २१–२३

### अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

'अथ परा यया तदक्षरमधिगम्यते', 'यत्तदद्रेश्यमग्राह्यमगोत्रम
मचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं य
योनिं परिपश्यन्ति धीराः' (मुण्ड० १।१।५,६) इति श्रूयते।
संशयः—किमयमद्रेश्यत्वादिगुणको भूतयोनिः प्रधानं स्यादुत
आहोस्वित्परमेश्वर इति। तत्र प्रधानमचेतनं भूतयोनिरिति
अचेतनानामेव तद्दृष्टान्तत्वेनोपादानात्। 'यथोर्णनाभिः सृजते गृह
यथा पृथिव्यामोषधयः संभवन्ति। यथा सतः पुरुषात्केशलो
तथाक्षरात्संभवतीह विश्वम्' (मुण्ड० १।१।७) इति। ननूर्णना
पुरुषश्च चेतनाविह दृष्टान्तत्वेनोपात्तौ। नेति ब्रूमः। नहि केव
चेतनस्य तत्र सूत्रयोनित्वं केशलोमयोनित्वं चास्ति। चेतनाधि
ह्यचेतनमूर्णनाभिशरीरं सूत्रस्य योनिः, पुरुषशरीरं च केशलोम
प्रसिद्धम्। अपिच पूर्वत्र[3]ादृष्टत्वाद्यभिलापसंभवेऽपि द्रष्टृत्वाद्यभिला
भवान्न प्रधानमभ्युपगतम्। इह त्वदृश्यत्वादयो धर्माः प्रधाने
वन्ति। नचात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते। ननु 'यः
सर्ववित्' (मुण्ड० १।१।९) इत्ययं वाक्यशेषोऽचेतने प्राधने
संभवति, कथं प्रधानं भूतयोनिः प्रतिज्ञायत इति। अत्रोच्यते—
तदक्षरमधिगम्यते' 'यत्तदद्रेश्यम्' इत्यक्षरशब्देनादृश्यत्वादिगुणकं
तयोनिं श्रावयित्वा पुनरन्ते श्रावयिष्यति—'अक्षरात्परतः परः' (मु
२।१।२) इति। तत्र यः परोऽक्षराच्छ्रुतः स सर्वज्ञः सर्ववित्सं
ष्यति। प्रधानमेव त्वक्षरशब्दनिर्दिष्टं भूतयोनिः। यदा तु योनि
निमित्तवाची तदा शारीरोऽपि भूतयोनिः स्यात्, धर्माधर्माभ्यां
जातस्योपार्जनादिति। एवं प्राप्तेऽभिधीयते—योऽयमदृश्यत्वादिगु
भूतयोनिः स परमेश्वर एव स्यान्नान्य इति। कथमेतदवगम्यते। धर्मो

---

१ अद्रेश्यमदृश्यं ज्ञानेन्द्रियैः, अग्राह्यं कर्मेन्द्रियैः। २ ऊर्णनाभिर्लूता
३ पूर्वत्र पूर्वस्मिन्नधिकरणे।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते—'यः सर्वज्ञः सर्ववित्' इति । नहि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा संभवति । नन्वक्षरशब्दनिर्दिष्टाद्भूतयोनेः परस्यैव तत्सर्वज्ञत्वं सर्ववित्त्वं च न भूतयोनिविषयमित्युक्तम् । अत्रोच्यते—नैवं संभवति । यत्कारणं 'अक्षरात्संभवतीह विश्वम्' इति प्रकृतं भूतयोनिमिह जायमानप्रकृतित्वेन निर्दिश्यानन्तरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति—'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' इति । तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृतस्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्म उच्यत इति गम्यते । 'अक्षरात्परतः परः' इत्यत्रापि न प्रकृताद्भूतयोनेरक्षरात्परः कश्चिदभिधीयते । कथमेतदवगम्यते । 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' ( मुण्ड० १।२।१३ ) इति प्रकृत्य तस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात् । कथं तर्हि 'अक्षरात्परतः परः' इति व्यपदिश्यत इति, उत्तरसूत्रे तद्वक्ष्यामः । अपिचात्र द्वे विद्ये वेदितव्ये उक्ते—'परा चैवापरा च' इति । तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वा ब्रवीति—'अथ परा यया तदक्षरमधिगम्यते' इत्यादि । तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतम् । यदि पुनः परमेश्वरादन्यदृदृश्यत्वादिगुणकमक्षरं परिकल्प्येत नेयं परा विद्या स्यात् । परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते । नच प्रधानविद्या निःश्रेयसफला केनचिदभ्युपगम्यते । तिस्रश्च विद्याः प्रतिज्ञायेरन्, त्वत्पक्षेऽक्षराद्भूतयोनेः परस्य परमात्मनः प्रतिपाद्यमानत्वात् । द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मु० १।१।३ ) इति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्प्यते, नाचेतनमात्रैकायतने प्रधाने, भोग्यव्यतिरिक्ते वा

१ नहीति । 'अक्ताः शर्करा उपदधाति' तत्र 'तेजो वै घृतं' इति शेषान्निर्णयवदत्रापि अदृश्यत्वादेः शेषान्निर्णयः । २ येन ज्ञानेनाक्षरं प्रकृतं भूतयोनिं पुरुषं सत्यं वेद ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भोक्तरि । अपिच 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय
ष्ठपुत्राय प्राह' ( मुण्ड० १।१।१ ) इति ब्रह्मविद्यां प्राधान्येनोप
परापरविभागेन परां विद्यामक्षराधिगमनीं दर्शयंस्तस्या ब्रह्म
द्यात्वं दर्शयति । सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्याब्र
बाधिता स्यात् । अपरर्ग्वेदादिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रम उप
स्यते ब्रह्मविद्याप्रशंसार्थ । 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्त
येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि
( मुण्ड० १।२।७ ) इत्येवमादिनिन्दावचनात् । निन्दित्वा चापरां
ततो विरक्तस्य परविद्याधिकारं दर्शयति—'परीक्ष्य लोकान्कर्मचि
न्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिग
त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' ( मुण्ड० १।२।१२ ) इति । यत्तु
चेतनानां पृथिव्यादीनां दृष्टान्तत्वेनोपादानाद्दार्ष्टान्तिकेनाप्यचेतनेन
योनिना भवितव्यमिति । तदयुक्तम् । नहि दृष्टान्तदार्ष्टान्तिकयोरत्य
साम्येन भवितव्यमिति नियमोऽस्ति । अपिच स्थूलाः पृथिव्या
दृष्टान्तत्वेनोपात्ता इति न स्थूल एव दार्ष्टान्तिको भूतयोनिरभ्युपगन्त
तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव ॥ २१ ॥

**विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥**

इतश्च परमेश्वर एव भूतयोनिर्नेतरौ शारीरः प्रधानं वा । कस्मा
विशेषणभेदव्यपदेशाभ्याम् । विशिनष्टि हि प्रकृतं भूतयोनिं शारीर
लक्षणत्वेन—'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः । अप्रा
ह्यमनाः शुभ्रः' ( मुण्ड० २।१।२ ) इति । नह्येतद्दिव्यत्वादिविशेषण
द्याप्रत्युपस्थापितनामरूपपरिच्छेदाभिमानिनस्तद्धर्मान्स्वात्मनि कल्प
शारीरस्योपपद्यते । तस्मात्साक्षादौपनिषदः पुरुष इहोच्यते । तथा

१ सर्वविद्यानां प्रतिष्ठा समाप्तिर्यस्याम् । २ प्लवन्ते गच्छन्ति अस्थायिन इति
अष्टादशेति षोडशर्त्विजः यजमानः पत्नी चेत्यष्टादश । येषूक्तं अवरमनित्यं कर्म
अपियन्ति प्राप्नुवन्ति । ३ प्रत्यक्षादिना कर्मसाध्यांल्लोकाननित्यतया ज्ञात्वा
वैराग्यं गच्छेत् । कुतः, कृतेन कर्मणा अकृतो मोक्षो नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नादपि प्रकृतं भूतयोनिं भेदेन व्यपदिशति—'अक्षरात्परतः परः' इति । अक्षरमव्याकृतं नामरूपबीजशक्तिरूपं भूतसूक्ष्ममीश्वराश्रयं तस्यैवोपाधिभूतं सर्वस्माद्विकारात्परो योऽविकारस्तस्मात्परतः पर इति भेदेन व्यपदेशात्परमात्मानमिह विवक्षितं दर्शयति । नात्र प्रधानं नाम किंचित्स्वतन्त्रं तत्त्वमभ्युपगम्य तस्माद्भेदव्यपदेश उच्यते । किं तर्हि यदि प्रधानमपि कल्प्यमानं श्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यं भूतसूक्ष्मं परिकल्प्येत परिकल्प्यताम् । तस्माद्भेदव्यपदेशात्परमेश्वरो भूतयोनिरित्येतदिह प्रतिपाद्यते ॥ २२ ॥

कुतश्च परमेश्वरो भूतयोनिः—

रूपोपन्यासाच्च ॥ २३ ॥

अपिच 'अक्षरात्परतः परः' इत्यस्यानन्तरम् 'एतस्माज्जायते प्राणः' इति प्राणप्रभृतीनां पृथिवीपर्यन्तानां तत्त्वानां सर्गमुक्त्वा तस्यैव भूतयोनेः सर्वविकारात्मकं रूपमुपन्यस्यमानं पश्यामः—'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' ( मुण्ड० २।१।४ । इति ) तच्च परमेश्वरस्यैवोचितं, सर्वविकारकारणत्वात् । न शारीरस्य तनुमहिम्नः । नापि प्रधानस्यायं रूपोपन्यासः संभवति, सर्वभूतान्तरात्मत्वासंभवात् । तस्मात्परमेश्वर एव भूतयोनिर्नेतराविति गम्यते । कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते, प्रकरणात्, 'एषः' इति च प्रकृतानुकर्षणात् । भूतयोनिं हि प्रकृत्य 'एतस्माज्जायते प्राणः', 'एष सर्वभूतान्तरात्मा' इति वचनं भूतयोनिविषयमेव भवति । यथोपाध्यायं प्रकृत्यैतस्मादधीष्वैष वेदवेदाङ्गपारग इति वचनमुपाध्यायविषयं भवति तद्वत् । कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं संभवति । सर्वात्मत्वविवक्षयेदमुच्यते नतु विग्रहवत्त्वविवक्षयेत्यदोषः । 'अहमन्नमहमन्नादः' ( तै०

---

१ अश्नोति व्याप्नोति स्वविकारजातमित्यक्षरम् । अव्याकृतमव्यक्तम् । नामरूपयोर्बीजमीश्वरस्तस्य शक्तिरूपम् । २ अग्निर्द्युलोकः, विवृता वेदाः वाक्, पद्भ्यां पादौ । ३ तनुमहिम्नोऽल्पप्रज्ञकः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३।१०।६ ) इत्यादिवत् । अन्ये पुनर्मन्यन्ते—नायं भूतयोने रूपो-
न्यासः, जायमानत्वेनोपन्यासात् । 'एतस्माज्जायते प्राणो मनः सर्वे-
याणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति हि पू-
प्राणादिपृथिव्यन्तं तत्त्वजातं जायमानत्वेन निरदिक्षत् । उत्तरत्रापि
'तस्मादग्निः समिधो यस्य सूर्यः' इत्येवमादि, 'अतश्च सर्वा ओष-
रसाश्च' इत्येवमन्तं जायमानत्वेनैव निर्देक्ष्यति । इहैव कथमक-
न्तराले भूतयोने रूपमुपन्यसेत् । सर्वात्मत्वमपि सृष्टिं परिसमाप्यो-
क्ष्यति—'पुरुष एवेदं विश्वं कर्म' (मुण्ड० २।१।१०) इत्यादिना । श्रु-
स्मृत्योश्च त्रैलोक्यशरीरस्य प्रजापतेर्जन्मादि निर्दिश्यमानमुपलभामहे
'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दा-
पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम' ( ऋ० सं० १०।१२१
इति । समवर्ततेत्यजायतेत्यर्थः । तथा 'स वै शरीरी प्रथमः स वै
उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत' इति च । वि-
पुरुषस्यापि सर्वभूतान्तरात्मत्वं संभवति, प्राणात्मना सर्वभूताना-
त्मवस्थानात् । अस्मिन्पक्षे 'पुरुष एवेदं विश्वं कर्म' इत्यादिसर्वा-
पन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयम् ॥ २३ ॥

## ७ वैश्वानराधिकरणम् । सू० २४–३२

### वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

'को न आत्मा किं ब्रह्म' इति, 'आत्मानमेवेमं वैश्वानरं संप्रत्य-
तमेव नो ब्रूहि' ( छा० ५।११।१,६ ) इति चोपक्रम्य द्युसूर्यवा-
काशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च वै-
नरं प्रत्येपां मूर्धादिभावमुपदिश्याम्नायते—'यस्त्वेतमेवं प्रादेशमात्र-

---

१ यश्च सूर्यो द्युलोकाग्नेः समिध इव भासकः । २ हिरण्यगर्भः अग्रे समवर्तत । सन् भूतग्रामस्यैकः पतिर्बभूवेति शेषः । कस्मै प्रजापतये । विधेम परिचरेम । न इति । प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनकबुडिलाः समेत्येत्थं मीमांसां चक्रुः राजं गत्वा । अध्येपि स्मरसि । ४ अभि आभिमुख्येनापरोक्षतया विश्वं जानातीत्यभिविमानस्तम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वा-
त्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्वि-
श्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो[1] बहुलो बस्तिरेव रयिः पृथिव्येव
पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आ-
स्यमाहवनीयः' ( छा० ५।१८।२ ) इत्यादि । तत्र संशयः—किं वैश्वा-
नरशब्देन जाठरोऽग्निरुपदिश्यत उत भूताग्निरथ तदभिमानिनी देवता
अथवा शारीर आहोस्वित्परमेश्वर इति । किं पुनरत्र संशयकारणम् ।
वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च
शारीरपरमेश्वरयोः । तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति
संशयः । किं तावत्प्राप्तम्, जाठरोऽग्निरिति । कुतः । तत्र हि विशेषेण
कचित्प्रयोगो दृश्यते—'अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं
पच्यते यदिदमद्यते' ( बृह० ५।९ ) इत्यादौ । अग्निमात्रं वा स्यात्,
सामान्येनापि प्रयोगदर्शनात् 'विश्वस्मा[2] अग्निं भुवनाय देवा वैश्वानरं
केतुमह्नामकृण्वन्' ( ऋ० सं० १०।८८।१२ ) इत्यादौ । अग्निशरीरा
वा देवता स्यात्, तस्यामपि प्रयोगदर्शनात् 'वैश्वानरस्य[3] सुमतौ स्याम
राजा हि कं भुवनानामभिश्रीः' ( ऋ० सं० १।९८।१ ) इत्येवमाद्यायाः
श्रुतेर्देवतायामैश्वर्याद्युपेतायां संभवात् । अथात्मशब्दसामानाधिकरण्या-
दुपक्रमे च 'को न आत्मा किं ब्रह्म' इति केवलात्मशब्दप्रयोगादात्मश-
ब्दवशेन च वैश्वानरशब्दः परिणेय इत्युच्यते, तथापि शारीर आत्मा
स्यात्, तस्य भोक्तृत्वेन वैश्वानरसंनिकर्षात् । प्रादेशमात्रमिति च विशे-
षणस्य तस्मिन्नुपाधिपरिच्छिन्ने संभवात् । तस्मान्नेश्वरो वैश्वानर इत्येवं प्राप्ते
तत इदमुच्यते—वैश्वानरः परमात्मा भवितुमर्हतीति । कुतः, साधारणशब्द-
विशेषात् । साधारणशब्दयोर्विशेषः साधारणशब्दविशेषः । यद्यप्येतावु-
भावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ, वैश्वानरशब्दस्तु त्रयस्य सा-

---

१ संदेहो देहस्य मध्यभागः । रयिर्धनम् । २ विश्वस्मै भुवनाय वैश्वानरमग्निमह्नां केतुं चिह्नं सूर्यमकृण्वन्देवाः । तदुदये दिनव्यवहारात् । ३ वैश्वानरस्य देवस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम । तस्यास्मद्विषया सुमतिर्भवत्वित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धारणः, आत्मशब्दश्च द्वयस्य तथापि विशेषो दृश्यते, येन परमेश्वर
तयोरभ्युपगम्यते, 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुते
इत्यादि । अत्र हि परमेश्वर एव द्युमूर्धत्वादिविशिष्टोऽवस्थान्तरगतः प्र
त्मत्वेनोपन्यस्त आध्यानायेति गम्यते, कारणत्वात् । कारणस्य हि सर्वा
कार्यगताभिरवस्थाभिरवस्थावत्त्वाद्द्युलोकाद्यवयवत्वमुपपद्यते । 'स
र्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' इति च सर्वलोका
फलं श्रूयमाणं परमकारणपरिग्रहे संभवति । 'एवं हाऽस्य सर्वे पा
प्रदूयन्ते' ( छा० ५।२४।३ ) इति च तद्विदः सर्वपाप्मप्रदाहश्र
'को न आत्मा किं ब्रह्म' इति चात्मब्रह्मशब्दाभ्यामुपक्रम इत्येवं
लिङ्गानि परमेश्वरमेवावगमयन्ति । तस्मात्परमेश्वर एव वैश्वानरः ॥

## स्मर्यमाणमनुमानं स्यादिति ॥ २५ ॥

इतश्च परमेश्वर एव वैश्वानरः, यस्मात्परमेश्वरस्यैवाग्निरास्यं
द्यौर्मूर्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते—'यस्याग्निरास्यं द्यौर्मूर्धा खं
श्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥'
एतत्स्मर्यमाणं रूपं मूलभूतां श्रुतिमनुमापयदस्य वैश्वानरशब्दस्य
श्वरपरत्वेऽनुमानं लिङ्गं गमकं स्यादित्यर्थः । इतिशब्दो हेत्व
यस्मादिदं गमकं तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः ।
स्तुतिरियं 'तस्मै लोकात्मने नमः' इति । स्तुतित्वमपि
मूलभूते वेदवाक्ये सम्यगीदृशेन रूपेण संभवति । 'द्यां मूर्धानं
विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशः श्रोत्रे
पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता ॥' इत्येवंजातीया
च स्मृतिरिहोदाहर्तव्या ॥ २५ ॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्यु-
## देशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥

अत्राह—न परमेश्वरो वैश्वानरो भवितुमर्हति । कुतः, शब्दादि
भ्योऽन्तःप्रतिष्ठानाच्च । शब्दस्तावद्वैश्वानरशब्दो न परमेश्वरे संभ

१ अवस्थान्तरमध्यात्ममधिदैवमित्येवंरूपम् । २ यथाग्नौ निक्षिप्तमिषीकातूलं
एवं ह्यस्य विदुषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अर्थान्तरे रूढत्वात् । तथाग्निशब्दः 'स एषोऽग्निर्वैश्वानरः' इति । आदिशब्दात् 'हृदयं गार्हपत्यः' ( छा० ५।१८।२ ) इत्याद्यग्नित्रेताप्रकल्पनम् । 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' ( छा० ५।१९।१ ) इत्यादिना च प्राणाहुत्यधिकरणतासंकीर्तनम् । एतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः । तथान्तःप्रतिष्ठानमपि श्रूयते—'पुरुषेऽन्तःप्रतिष्ठितं वेद' इति । तच्च जाठरे संभवति । यदप्युक्तं—मूर्धैव सुतेजा इत्यादेर्विशेषात्कारणात्परमात्मा वैश्वानर इति । अत्र ब्रूमः—कुतो ह्येष निर्णयः, यदुभयथापि विशेषप्रतिभाने सति परमेश्वरविषय एव विशेष आश्रयणीयो न जाठरविषय इति । अथवा भूताग्नेरन्तर्बहिश्चावतिष्ठमानस्यैष निर्देशो भविष्यति । तस्यापि हि द्युलोकादिसंबन्धो मन्त्रवर्णादवगम्यते—'यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्' ( ऋ० सं० १०।८८।३ ) इत्यादौ । अथवा तच्छरीराया देवताया ऐश्वर्ययोगाद्द्युलोकाद्यवयवत्वं भविष्यति । तस्मान्न परमेश्वरो वैश्वानर इति । अत्रोच्यते—न तथादृष्ट्युपदेशादिति । न शब्दादिभ्यः कारणेभ्यः परमेश्वरस्य प्रत्याख्यानं युक्तम् । कुतः, तथा जाठरापरित्यागेन दृष्ट्युपदेशात् । परमेश्वरदृष्टिर्हि जाठरे वैश्वानर इहोपदिश्यते, 'मनो ब्रह्मेत्युपासीत' ( छा० ३।१८।१ ) इत्यादिवत् । अथवा जाठरवैश्वानरोपाधिः परमेश्वर इह द्रष्टव्यत्वेनोपदिश्यते, 'मनोमयः प्राणशरीरो भारूपः' ( छा० ३।१४।२ ) इत्यादिवत् । यदि चेह परमेश्वरो न विवक्ष्येत केवल एव जाठरोऽग्निर्विवक्ष्येत ततो मूर्धैव सुतेजा इत्यादेर्विशेषस्यासंभव एव स्यात् । यथा तु देवताभूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते तथोत्तरसूत्रे वक्ष्यामः । यदि च केवल एव जाठरो विवक्ष्येत, पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं तस्य स्यान्न तु पुरुषत्वम् । पुरुषमपि चैनमधीयते वाजसनेयिनः—'स एषोऽग्नि-

---

१ भक्तमन्नं होमीयं होमसाधनं तेन प्राणाग्निहोत्रं कार्यमित्यर्थः । २ इमां पृथिवीमुत द्यामपि द्यावापृथिव्यावेव रोदसी यो भानुरूपेणाततान व्याप्तवान् । अन्तरिक्षं च तयोर्मध्यमाततान स देवो द्युलोकाद्यवयवो ध्येय इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' (श० ब्रा० १०।६।१।११) इति। परमेश्वरस्य सर्वात्मत्वात्पुरुषत्वं पुरुषेऽन्तःप्रतिष्ठितत्वं चोभयमुपपद्यते। ये 'पुरुषविधमपि चैनमधीयते' इति सूत्रावयवं पठन्ति, तेषामेषोऽर्थः केवलजाठरपरिग्रहे पुरुषेऽन्तःप्रतिष्ठितत्वं केवलं स्यान्न पुरुषविधत्वम्। पुरुषविधमपि चैनमधीयते वाजसनेयिनः—'पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति। पुरुषविधत्वं च प्रकरणाद्यदधिदैवतं द्युमूर्धत्वं पृथिवीप्रतिष्ठितत्वान्तं, यच्चाध्यात्मं प्रसिद्धं मूर्धत्वादि चुबुकप्रतिष्ठितत्वान्तं तत्परिगृह्यते॥ २६॥

## अतएव न देवता भूतं च॥ २७॥

यत्पुनरुक्तं भूताग्नेरपि मन्त्रवर्णे द्युलोकादिसंबन्धदर्शनान्मूर्धैव ... जा इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति, यच्छारीराया दे... वैश्वर्ययोगादिति, तत्परिहर्तव्यम्। अत्रोच्यते—अतएवोक्तेभ्यो हे... न देवता वैश्वानरः। तथाभूताग्निरपि न वैश्वानरः। नहि भूता... ण्यप्रकाशमात्रात्मकस्य द्युमूर्धत्वादिकल्पनोपपद्यते, विकारस्य ... रान्तरात्मत्वासंभवात्। तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युर्... दिकल्पना संभवति। अकारणत्वात्परमेश्वराधीनैश्वर्यत्वाच्च। आ... त्वासंभवश्च सर्वेष्वेषु पक्षेषु स्थित एव॥ २७॥

## साक्षादप्यविरोधं जैमिनिः॥ २८॥

पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य... क्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन। इदानीं तु विनैव प्रतीकोपाधि... नाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति ... निराचार्यो मन्यते। ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्व... शब्दादीनि च कारणानि विरुध्येरन्निति। अत्रोच्यते—अन्तःप्र... तत्ववचनं तावन्न विरुध्यते। नहीह 'पुरुषविधं पुरुषेऽन्तःप्र...

१ यत् यः। पुरुषः पूर्णः। यो वेद स सर्वत्र भवे... । ३ इहेति वाजसने...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेद इति' जाठराग्न्यभिप्रायेणेदमुच्यते । तस्याप्रकृतत्वादसंशब्दितत्वाच्च । कथं तर्हि यत्प्रकृतं मूर्धादिचुबुकान्तेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते—'पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति । यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वत् । अथवा यः प्रकृतः परमात्मा- ध्यात्ममधिदैवतं च पुरुषविधत्वोपाधिस्तस्य यत्केवलं साक्षिरूपं तदभि- प्रायेणेदमुच्यते—'पुरुषेऽन्तःप्रतिष्ठितं[1] वेद' इति । निश्चिते च पूर्वा- परालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचि- द्योगेन वर्तिष्यते । विश्वश्चायं नरश्चेति, विश्वेषां वायं नरः, विश्वे वा नरा अस्येति विश्वानरः परमात्मा, सर्वात्मत्वात् । विश्वानर एव वैश्वानरः[2] । तद्धितोऽनन्यार्थः[3], राक्षसवायसादिवत् । अग्निशब्दोऽप्यग्र- णीत्वादियोगाश्रयणेन परमात्मविषय एव भविष्यति । गार्हपत्यादिक- ल्पनं प्राणाहुत्यधिकरणत्वं च परमात्मनोऽपि सर्वात्मत्वादुपपद्यते ॥ २८ ॥

कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यत इति तां व्याख्या- तुमारभते—

## अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अतिमात्रस्यापि[4] परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् । अभिव्यज्यते किल प्रादेशमात्रपरिमाणः[5] परमेश्वर उपासकानां कृते । प्रदेशेषु वा हृदयादिपूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते । अतः परमेश्वरेऽपि प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते ॥ २९ ॥

## अनुस्मृतेर्बादरिः ॥ ३० ॥

प्रादेशमात्रहृदयप्रतिष्ठेन[6] वायं मनसानुस्मर्यते तेन प्रादेशमात्र इत्यु- च्यते । यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत् । यद्यपि च यवेषु

---

१ अन्तःप्रतिष्ठितत्वं माध्यस्थ्यं साक्षित्वमित्यर्थः । २ अत्र 'नरे संज्ञाया' मिति पूर्व- पदस्य दीर्घत्वम् । ३ अनन्यार्थत्वं प्रकृत्यर्थातिरिक्तार्थशून्यत्वम् । ४ अतिक्रान्ता मात्राः परिमाणं यस्य तस्येति यावत् । ५ प्रदेशेषु वा मीयत इति प्रादेशमात्रः । ६ प्रादेशेन मनसा मीयत इति वा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वगतमेव परिमाणं प्रस्थसंबन्धाद्व्यज्यते । नचेह परमेश्वरगतं किंचित्परिमाणमस्ति यद्धृदयसंबन्धाद्व्यज्यते । तथापि प्रयुक्तायाः प्रादेशमात्रश्रुतेः संभवति यथाकथंचिदनुस्मरणमालम्बनमित्युच्यते । प्रादेशमात्रत्वेनायमप्रादेशमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्तायै । एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिराचार्यो मन्यते ॥ ३० ॥

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ ३१ ॥

संपत्तिनिमित्ता वा स्यात्प्रादेशमात्रश्रुतिः । कुतः । तथाहि—समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्यन्तांस्त्रैलोक्यात्मनो वैश्वानरस्यावयवानध्यात्ममूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति—'प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा नु व एतान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति । स होवाच मूर्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाचैष वै सुतेजा वैश्वानर इति । नासिके उपदिशन्नुवाचैष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वानर इति । चुबुकमुपदिशन्नुवाचैष वै प्रतिष्ठा वैश्वानर इति'। चुबुकमित्यधरं मुखफलकमुच्यते । यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायत आदित्यश्च सुतेजस्त्वगुणः । छान्दोग्ये पुनर्द्यौः सुतेजस्त्वगुणा समाम्नायत आदित्यश्च विश्वरूपत्वगुणः । तथापि नैतावता विशेषेण किंचिद्धीयते, प्रादेशमात्रश्रुतेरविशेषात् । सर्वशाखाप्रत्ययत्वाच्च संपत्तिनिमित्तां प्रादेशमात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते ॥ ३१ ॥

## आमनन्ति चैनमस्मिन् ॥ ३२ ॥

आमनन्ति चैनं परमेश्वरमस्मिन्मूर्धचुबुकान्तराले जाबालाः—'य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति । वरणायां नास्यां च मध्ये प्रतिष्ठित इति ।

१ प्रयुक्तायास्तदर्थे वर्तमानायाः । २ अविमुक्ते अविद्योपाधिकल्पितावच्छेदे जीवात्मनि भेदकल्पनया प्रतिष्ठित इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वै वरणा का च नासीति'। तत्र चेमामेव नासिकां वरणा नासीति निरुच्य या सर्वाणीन्द्रियकृतानि पापानि वारयतीति सा वरणा, सर्वाणीन्द्रियकृतानि पापानि नाशयतीति सा नासीति । पुनरामनन्ति—'कतमच्चास्य स्थानं भवतीति। भ्रुवोर्घ्राणस्य च यः संधिः स एष द्युलोकस्य परस्य च संधिर्भवतीति' ( जाबा० १ )। तस्मादुपपन्ना परमेश्वरे प्रादेशमात्रश्रुतिः । अभिविमानश्रुतिः प्रत्यगात्मत्वाभिप्राया । प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इत्यभिविमानः । अभिगतो वायं प्रत्यगात्मत्वाद्विमानश्च मानवियोगादित्यभिविमानः । अभिविमिमीते वा सर्वं जगत्कारणत्वादित्यभिविमानः । तस्मात्परमेश्वरो वैश्वानर इति सिद्धम् ॥ ३२ ॥ इति श्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥

---

## प्रथमाध्याये तृतीयः पादः ।

[ अत्रास्पष्टब्रह्मलिङ्गानां प्रायो ज्ञेयब्रह्मविषयाणां विचारः । एवं पादत्रयेणापि वाक्यविचारः ]

### १ द्युभ्वाद्यधिकरणम् । सू० १–७

### द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

इदं श्रूयते—'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' ( मुण्ड० २।२।५ ) इति । अत्र यदेतद्द्युप्रभृतीनामोतत्ववचनादायतनं किंचिदवगम्यते, तत्किं परं ब्रह्म स्यादाहोस्विदर्थान्तरमिति संदिह्यते । तत्रार्थान्तरं किमप्यायतनं स्यादिति प्राप्तम् । कस्मात्, 'अमृतस्यैष सेतुः' इति श्रवणात् । पारवान्हि लोके सेतुः प्रख्यातः । नच परस्य ब्रह्मणः पारवत्त्वं शक्यमभ्युपगन्तुं, 'अनन्तमपारम्' ( बृह० २।४।१२ ) इति श्रवणात् । अर्थान्तरे चायतने परिगृह्यमाणे स्मृतिप्रसिद्धं प्रधानं

---

१ वरणा भ्रूः । २ विमीयते ज्ञायते । ३ अभिविमिमीते निर्मिमीते । ४ अमृतस्येति श्रवणात् सेतुरिति श्रवणादिति योजना । ५ सेतुरिति श्रवणादिति व्याचष्टे-पारवान्हीति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिग्रहीतव्यं, तस्य कारणत्वादायतनत्वोपपत्तेः । श्रुतिप्रसिद्धो वा वा
स्यात्, 'वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लो
परश्च लोकः सर्वाणि च भूतानि संदृब्धानि[1] भवन्ति' ( बृह० ३।७।
इति वायोरपि विधारणत्वश्रवणात् । शारीरो वा स्यात् । तस्
भोक्तृत्वाद्भोग्यं प्रपञ्चं प्रत्यायतनत्वोपपत्तेरित्येवं प्राप्त इदमाह—द्यु
द्यायतनमिति । द्यौश्च भूश्च द्युभुवौ द्युभुवावादी यस्य तदिदं द्युभ्वा
यदेतदस्मिन्वाक्ये द्यौः पृथिव्यन्तरिक्षं मनः प्राणा इत्येवमात्मकं ज
तत्वेन निर्दिष्टं तस्यायतनं परं ब्रह्म भवितुमर्हति । कुतः, स्वश
आत्मशब्दादित्यर्थः । आत्मशब्दो हीह भवति—'तमेवैकं जा
आत्मानम्' इति । आत्मशब्दश्च परमात्मपरिग्रहे सम्यगवकल्पते
र्थान्तरपरिग्रहे । क्वचिच्च स्वशब्देनैव ब्रह्मण आयतनत्वं श्रूय
'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (
६।८।४ ) इति । स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म संकीर्त
'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' इति । 'ब्रह्मैवेद
पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण' ( मुण्ड० २।२।११ ) इति
तत्र त्वायतनायतनवद्भावश्रवणात् । सर्वं ब्रह्मेति च सामानाधि[2]
ण्यात् । यथानेकात्मको वृक्षः शाखा स्कन्धो मूलं चेत्येवं नाना
विचित्र आत्मेत्याशङ्का संभवति, तां निवर्तयितुं सावधारणमा
'तमेवैकं जानथ आत्मानम्' इति । एतदुक्तं भवति—न कार्यप्रप
शिष्टो विचित्र आत्मा विज्ञेयः । किंतर्ह्यविद्याकृतं कार्यप्रपञ्चं वि
प्रविलापयन्तस्तमेवैकमायतनभूतमात्मानं जानथैकरसमिति ।
यस्मिन्नास्ते देवदत्तस्तदानयेत्युक्त आसनमेवानयति न देवदत्तम् ।
दायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमुपदिश्यते । विकारानृता[3]
न्धस्य चापवादः श्रूयते—'मृत्योः स मृत्युमाप्नोति य इह नानेव प
( का० २।४।११ ) इति । सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रप

१ संदृब्धानि संग्रथितानि । २ सामानाधिकरण्यात् विचित्र आत्मेति शङ्
३ विकारेऽनृते कल्पिते अभिसन्धोऽभिमानो यस्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विलापनार्थं नानेकरसताप्रतिपादनार्थम् । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' ( बृह० ४।५।१३ ) इत्येकरसताश्रवणात् । तस्माद्द्युभ्वाद्यायतनं परं ब्रह्म । यत्तूक्तं, सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भवितव्यमिति । अत्रोच्यते—विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्यते न पारवत्त्वादि । नहि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते । सेतुशब्दार्थोऽपि विधारणत्वमात्रमेव न पारवत्त्वादि, षिञो बन्धनकर्मणः सेतुशब्दव्युत्पत्तेः[1] । अपर आह—'तमेवैकं जानथ आत्मानम्' इति यदेतत्संकीर्तितमात्मज्ञानं, यच्चैतत् 'अन्या वाचो विमुञ्चथ' इति वाग्विमोचनं, तदत्रामृतत्वसाधनत्वात् 'अमृतस्यैष सेतुः' इति सेतुश्रुत्या संकीर्त्यते न तु द्युभ्वाद्यायतनम् । तत्र यदुक्तं सेतुश्रुतेर्ब्रह्मणोऽर्थान्तरेण द्युभ्वाद्यायतनेन भाव्यमित्येतदयुक्तम् ॥ १ ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

इतश्च परमेव ब्रह्म द्युभ्वाद्यायतनम् । यस्मान्मुक्तोपसृप्यतास्य व्यपदिश्यमाना दृश्यते । मुक्तैरुपसृप्यं मुक्तोपसृप्यम् । देहादिष्वनात्मस्वहमस्मीत्यात्मबुद्धिरविद्या, ततस्तत्पूजनादौ रागस्तत्परिभवादौ द्वेषस्तदुच्छेददर्शनाद्भयं मोहश्चेत्येवमयमनन्तभेदोऽनर्थव्रातः संततः सर्वेषां नः प्रत्यक्षः । तद्विपर्ययेणाविद्यारागद्वेषादिदोषमुक्तैरुपसृप्यं गम्यमेतदिति द्युभ्वाद्यायतनं प्रकृत्य व्यपदेशो भवति । कथम्, 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ( मुण्ड० २।२।८ ) इत्युक्त्वा ब्रवीति—'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' ( मुण्ड० ३।२।८ ) इति । ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे—'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' ( बृह० ४।४।७ ) इत्येवमादौ । प्रधानादीनां तु न कचिन्मुक्तोपसृप्यत्वमस्ति प्रसिद्धम् । अपिच 'तमे-

---

१ सिनोति बध्नातीति सेतुः । पदार्थैकदेशो विधारणमित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः' इति वा
मोकपूर्वकं विज्ञेयत्वमिह द्युभ्वाद्यायतनस्योच्यते । तच्च श्रुत्यन्तरे
दृष्टम्—'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहू
ञ्छब्दान्वाचो विग्लापनं हि तत्' । ( बृह० ४।४।२१ ) इति । तस्मा
द्युभ्वाद्यायतनं परं ब्रह्म ॥ २ ॥

## नानुमानमतच्छब्दात् ॥ ३ ॥

यथा ब्रह्मणः प्रतिपादको वैशेषिको हेतुरुक्तो नैवमर्थान्तरस्य
षिको हेतुः प्रतिपादकोऽस्तीत्याह । नानुमानिकं सांख्यस्मृतिपरिक
प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यम् । कस्मात्, अतच्छब्द
तस्याचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दः, न तच्छब्दोऽ
ब्दः । न ह्यत्राचेतनस्य प्रधानस्य प्रतिपादकः कश्चिच्छब्दोऽस्ति, येन
प्रधानं कारणत्वेनायतनत्वेन वावगम्येत । तद्विपरीतस्य चेतनस्य
पादकशब्दोऽत्रास्ति—'यः सर्वज्ञः सर्ववित्' ( मुण्ड० १।१।९ ) इत्या
अतएव न वायुरपीह द्युभ्वाद्यायतनत्वेनाश्रीयते ॥ ३ ॥

## प्राणभृच्च ॥ ४ ॥

यद्यपि प्राणभृतो विज्ञानात्मन आत्मत्वं चेतनत्वं च संभवति
प्युपाधिपरिच्छिन्नज्ञानस्य सर्वज्ञत्वाद्यसंभवे सत्यस्मादेवातच्छब्द
णभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः । नचोपाधिपरिच्छिन्न
विभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक्संभवति । पृथग्यो
णमुत्तरार्थम् ॥ ४ ॥

कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

## भेदव्यपदेशात् ॥ ५ ॥

भेदव्यपदेशश्चेह भवति—'तमेवैकं जानथ आत्मानम्' इति
तृभावेन । तत्र प्राणभृत्तावन्मुमुक्षुत्वाज्ज्ञाता, परिशेषादात्मशब्द
ब्रह्म ज्ञेयं द्युभ्वाद्यायतनमिति गम्यते, न प्राणभृत् ॥ ५ ॥

१ प्रज्ञा वाक्यार्थधीः । ब्राह्मणपदमनुक्तद्विजोपलक्षणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

प्रकरणात् ॥ ६ ॥

प्रकरणं चेदं परमात्मनः । 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मु० १।१।३ ) इत्येकविज्ञानेन सर्वविज्ञानापेक्षणात् । परमात्मनि हि सर्वात्मके विज्ञाते सर्वमिदं विज्ञातं स्यान्न केवले प्राणभृति ॥ ६ ॥

कुतश्च न प्राणभृद्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः—

स्थित्यदनाभ्यां च ॥ ७ ॥

द्युभ्वाद्यायतनं च प्रकृत्य 'द्वा सुपर्णा सयुजा सखाया' ( मु० ३।१।१ ) इत्यत्र स्थित्यदने निर्दिश्येते । 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति कर्मफलाशनं, 'अनश्नन्नन्योऽभिचाकशीति' इत्यौदासीन्येनावस्थानं च । ताभ्यां च स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञौ तत्र गृह्येते । यदि चेश्वरो द्युभ्वाद्यायतनत्वेन विवक्षितस्ततस्तस्य प्रकृतस्येश्वरस्य क्षेत्रज्ञात्पृथग्वचनमवकल्पते । अन्यथा ह्यप्रकृतवचनमाकस्मिकमसंबद्धं स्यात् । ननु तवापि क्षेत्रज्ञस्येश्वरात्पृथग्वचनमाकस्मिकमेव प्रसज्येत । न । तस्याविवक्षितत्वात् । क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसंबद्धो लोकत एव प्रसिद्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते । ईश्वरस्तु लोकतोऽप्रसिद्धत्वाच्छ्रुत्या तात्पर्येण विवक्ष्यत इति न तस्याकस्मिकं वचनं युक्तम् । 'गुहां प्रविष्टावात्मानौ हि' इत्यत्राप्येतद्दर्शितं 'द्वा सुपर्णा' इत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते इति । यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदापि न विरोधः कश्चित् । कथम् । प्राणभृद्धीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति निषिध्यते । यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते परमात्मैव स भवति । यथा घटादिच्छिद्राणि घटादिभिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवन्ति, तद्वत्प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो

मु० सु० ६

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोपपद्यते । तस्मात्सत्त्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्व... पेधः । तस्मात्परमेव ब्रह्म द्युभ्वाद्यायतनम् । तदेतत् 'अदृश्यत्व... गुणको धर्मोक्तेः' इत्यनेनैव सिद्धम् । तस्यैव हि भूतयोनिवा... मध्य इदं पठितम् 'यस्मिन्द्यौः पृथिवी चान्तरिक्षम्' इति । प्रप... तु पुनरुपन्यस्तम् ॥ ७ ॥

२ भूमाधिकरणम् । सू० ८–९

## भूमा संप्रसादादध्युपदेशात् ॥ ८ ॥

इदं समामनन्ति—'भूमा त्वेव विजिज्ञासितव्य इति भूमा... गवो विजिज्ञास इति । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्य... जानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति त... ( छा० ७।२३,२४ ) इत्यादि । तत्र संशयः—किं प्राणो भूमा स्यादाहोस्वित्परमात्मेति । कुतः संशयः । भूमेति तावद्बहुत्वं... यते, 'बहोर्लोपो भू च बहोः' ( पा० ६।४।१५८ ) इति भूम्नो भावप्रत्ययान्ततास्मरणात् । किमात्मकं पुनस्तद्बहुत्वमिति वि... ङ्क्षायां 'प्राणो वा आशाया भूयान्' ( छा० ७।१५।१ ) इति ... नात्प्राणो भूमेति प्रतिभाति । तथा 'श्रुतं ह्येव मे भगवदृशे... शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्शोकस्य... तारयतु' ( छा० ७।१।३ ) इति प्रकरणोत्थानात्परमात्मा ... प्रतिभाति । तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति ... संशयः । किं तावत्प्राप्तम् । प्राणो भूमेति । कस्मात् । भूयःप्रश्न... वचनपरम्परादर्शनात् । यथा हि 'अस्ति भगवो नाम्नो भूय' ... 'वाग्वाव नाम्नो भूयसी' इति । तथा 'अस्ति भगवो वाचो भूय' ... 'मनो वाव वाचो भूयः' इति च नामादिभ्यो ह्या प्राणाद्भूयःप्रश्नप्रति... वचनप्रवाहः प्रवृत्तः । नैवं प्राणात्परं भूयःप्रश्नप्रतिवचनं दृश्यते ... भगवः प्राणाद्भूय इत्यदो वाव प्राणाद्भूय इति । प्राणमेव तु ...

१ व्यवहारातीतं पूर्णं वस्तु भूमा । २ भगवदृशेभ्यो युष्मत्सदृशेभ्यः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आशान्तेभ्यो भूयांसं 'प्राणो वा आशाया भूयान्' इत्यादिना सप्रपञ्चमुक्त्वा प्राणदर्शिनश्चातिवादित्वम्—'अतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' इत्यभ्यनुज्ञाय 'एष तु वा अतिवदति यः सत्येनातिवदति' इति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्यादिपरम्परया भूमानमवतारयन्प्राणमेव भूमानं मन्यत इति गम्यते । कथं पुनः प्राणे भूमनि व्याख्यायमाने 'यत्र नान्यत्पश्यति' इत्येतद्भूम्नो लक्षणपरं वचनं व्याख्यायेतेति । उच्यते—सुषुप्त्यवस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहारनिवृत्तिदर्शनात्संभवति प्राणस्यापि 'यत्र नान्यत्पश्यति' इत्येतल्लक्षणम् । तथाच श्रुतिः 'न शृणोति न पश्यति' इत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' ( प्र० ४।२।३ ) इति तस्यामेवावस्थायां पञ्चवृत्तेः प्राणस्य जागरणं ब्रुवती प्राणप्रधानां सुषुप्त्यवस्थां दर्शयति । यच्चैतद्भूम्नः सुखत्वं श्रुतम्—'यो वै भूमा तत्सुखम्' ( छा० ७।२३ ) इति, तदप्यविरुद्धम् । 'अत्रैष देवः[1] स्वप्नान्न पश्यत्यथ यदेतस्मिञ्शरीरे सुखं भवति' ( प्र० ४।६ ) इति सुषुप्त्यवस्थायामेव सुखश्रवणात् । यच्च 'यो वै भूमा तदमृतम्' ( छा० ७।२४।१ ) इति, तदपि प्राणस्याविरुद्धं, 'प्राणो वा अमृतम्' ( कौ० ३।२ ) इति श्रुतेः । कथं पुनः प्राणं भूमानं मन्यमानस्य 'तरति शोकमात्मवित्' इत्यात्मविविदिषया प्रकरणस्योत्थानमुपपद्यते । प्राण एवेहात्मा विवक्षित इति ब्रूमः । तथाहि—'प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः' ( छा० ७।१५।१ ) इति प्राणमेव सर्वात्मानं करोति । 'यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितम्' इति च सर्वात्मत्वारनाभिनिदर्शनाभ्यां च संभवति वैपुल्यात्मिका भूमरूपता प्राणस्य । तस्मात्प्राणो भूमेत्येवं प्राप्तम् । तत इदमुच्यते—परमात्मैवेह भूमा भवितुमर्हति न प्राणः । कस्मात् । संप्रसादादध्युपदेशात् ।

---

१ देवः बुद्ध्याद्युपाधिको जीवः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संप्रसाद इति सुषुप्तं स्थानमुच्यते, सम्यक्प्रसीदत्यस्मिन्निति निर्वचना
बृहदारण्यके च स्वप्नजागरितस्थानाभ्यां सह पाठात् तस्यां च सं
दावस्थायां प्राणो जागर्तीति प्राणोऽत्र संप्रसादोऽभिप्रेयते । प्राण
भूम्न उपदिश्यमानत्वादित्यर्थः । प्राण एव चेद्भूमा स्यात्स एव स्व
र्ध्वमुपदिश्येतेत्यश्लिष्टमेवैतत्स्यात् । नहि नामैव नाम्नो भूय इति
ऊर्ध्वमुपदिष्टम् । किं तर्हि नाम्नोऽन्यदर्थान्तरमुपदिष्टं वागाख्यं
'वाग्वाव नाम्नो भूयसी' इति । तथा वागादिभ्योऽप्या प्राणादर्थ
मेव तत्र तत्रोर्ध्वमुपदिष्टम् । तद्वत्प्राणादूर्ध्वमुपदिश्यमानो भूमा प्रा
दर्थान्तरभूतो भवितुमर्हति । नन्विह नास्ति प्रश्नोऽस्ति भगवः प्रा
द्भूय इति, नापि प्रतिवचनमस्ति प्राणाद्वाव भूयोऽस्तीति, कथं प्रा
दधि भूमोपदिश्यत इत्युच्यते । प्राणविषयमेव चातिवादित्वमु
नुकृष्यमाणं पश्यामः—'एष तु वा अतिवदति यः सत्येनाति
इति । तस्मान्नास्ति प्राणादध्युपदेश इति । अत्रोच्यते—न शक्यं
विषयस्यैवातिवादित्वस्यैतदनुकर्षणमिति शक्यं वक्तुं, विशेषवादात्
सत्येनातिवदति' इति । ननु विशेषवादोऽप्ययं प्राणविषय एव भवि
कथम् । यथैषोऽग्निहोत्री यः सत्यं वदतीत्युक्ते न सत्यवदनेनाग्निहो
केन तर्हि, अग्निहोत्रेणैव । सत्यवदनं त्वग्निहोत्रिणो विशेष इ
तथा 'एष तु वा अतिवदति यः सत्येनातिवदति' इत्युक्ते न स
नेनातिवादित्वम्, केन तर्हि, प्रकृतेन प्राणविज्ञानेनैव । सत्यव
प्राणविदो विशेषो विवक्ष्यत इति । नेति ब्रूमः । श्रुत्यर्थपरित्यागप्रस
श्रुत्या ह्यत्र सत्यवदनेनातिवादित्वं प्रतीयते—'यः सत्येनाति
सोऽतिवदति' इति । नात्र प्राणविज्ञानस्य संकीर्तनमस्ति । प्र
णात्तु प्राणविज्ञानं संबध्येत । तत्र प्रकरणानुरोधेन
परित्यक्ता स्यात् । प्रकृतव्यावृत्त्यर्थश्च तुशब्दो न संगच्छते
तु वा अतिवदति' इति । 'सत्यं त्वेव विजिज्ञासितव्यम्'

१ प्रकरणात्तु संबध्येत अतिवादित्वे हेतुत्वेनेति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

७।१६) इति च प्रयत्नान्तरकरणमर्थान्तरविवक्षां सूचयति । तस्माद्यथै-कवेदप्रशंसायां प्रकृतायामेष तु महाब्राह्मणो यश्चतुरो वेदानधीत इत्येकवेदेभ्योऽर्थान्तरभूतश्चतुर्वेदः प्रशस्यते तादृगेतद्द्रष्टव्यम् । नच प्रश्नप्रतिवचनरूपयैवार्थान्तरविवक्षया भवितव्यमिति नियमोऽस्ति । प्रकृतसंबन्धासंभवकारितत्वादर्थान्तरविवक्षायाः । तत्र प्राणान्तमनु-शासनं श्रुत्वा तूष्णींभूतं नारदं स्वयमेव सनत्कुमारो व्युत्पादयति । यत्प्राणविज्ञानेन विकारानृतविषयेणातिवादित्वमनतिवादित्वमेव तत् 'एष तु वा अतिवदति यः सत्येनातिवदति' इति । तत्र सत्यमिति परं ब्रह्मोच्यते, परमार्थरूपत्वात् । 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१ ) इति च श्रुत्यन्तरात् । तथा व्युत्पादिताय नारदाय 'सोऽहं भगवः सत्येनातिवदानि' इत्येवं प्रवृत्ताय विज्ञानादिसाधनपरम्परया भूमान-मुपदिशति । तत्र यत्प्राणादधि सत्यं वक्तव्यं प्रतिज्ञातं तदेवेह भूमे-त्युच्यत इति गम्यते । तस्मादस्ति प्राणादधि भूम्न उपदेश इत्यतः प्राणादन्यः परमात्मा भूमा भवितुमर्हति । एवं चेहात्मविविदिषया प्रक-रणस्योत्थानमुपपन्नं भविष्यति । प्राण एवेहात्मा विवक्षित इत्येतदपि नोपपद्यते । नहि प्राणस्य मुख्यया वृत्त्यात्मत्वमस्ति । नचान्यत्र परमात्मज्ञानाच्छोकविनिवृत्तिरस्ति, 'नान्यः पन्था विद्यतेऽयनाय' ( श्वे० ६।१५ ) इति श्रुत्यन्तरात् । 'तं मा भगवाञ्शोकस्य पारं तारयतु' ( छा० ७।१।३ ) इति चोपक्रम्योपसंहरति—'तस्मै मृदित-कषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः' ( छा० ७।२६।२ ) इति । तम इति शोकादिकारणमविद्योच्यते । प्राणान्ते चानुशासने प्राणस्यान्यायत्ततोच्येत । 'आत्मतः प्राणः' ( छा० ७।२६।१ ) इति च ब्राह्मणम् । प्रकरणान्ते परमात्मविवक्षा भविष्यति, भूमा तु प्राण एवेति चेत्, न । 'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' ( छा० ७।२४।१ ) इत्यादिना भूम्न एवा प्रकरणसमाप्तेरनुकर्षणात् । वैपु-ल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते ॥ ८ ॥

१ प्रयत्नान्तरं विचारः । २ विज्ञानमत्र निदिध्यासनादि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धर्मोपपत्तेश्च ॥ ९ ॥

अपिच ये भूम्नि श्रूयन्ते धर्मास्ते परमात्मन्युपपद्यन्ते । नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इति नादिव्यवहाराभावं भूमन्यवगमयति । परमात्मनि चायं दर्श व्यवहाराभावोऽवगतः । 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं प (बृ० ४।५।१५ ) इत्यादिश्रुत्यन्तरात् । योऽप्यसौ सुषुप्ताव दर्शनादिव्यवहाराभाव उक्तः सोऽप्यात्मन एवासङ्गत्वविवक्ष न प्राणस्वभावविवक्षया, परमात्मप्रकरणात् । यदपि तस्याम सुखमुक्तं, तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तम् । यत आ 'एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्राम वन्ति' ( बृ० ४।३।३२ ) इति । इहापि 'यो वै भूमा तत्सुखं सुखमस्ति भूमैव सुखम्' इति सामयसुखनिराकरणेन ब्रह्मैव भूमानं दर्शयति । 'यो वै भूमा तदमृतम्' इत्यमृतत्वमपीह परमकारणं गमयति । विकाराणाममृतत्वस्यापेक्षिकत्वात्, 'अ दार्तम्' ( बृ० ३।४।२ ) इति च श्रुत्यन्तरात् । तथाच सत्यत्वं स्व प्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः त्मन्येवोपपद्यन्ते नान्यत्र । तस्माद्भूमा परमात्मेति सिद्धम् ॥ ९ ॥

## ३ अक्षराधिकरणम् । सू० १०—१२

अक्षरमम्बरान्तधृतेः ॥ १० ॥

'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति । स होवाचैतद्वै गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु' ( बृ० ३।८।७,८ ) श्रूयते । तत्र संशयः—किमक्षरशब्देन वर्ण उच्यते किंवा प इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात् द्व्यतिक्रमस्य चायुक्तत्वात्, 'ॐकार एवेदं सर्वम्' ( छा० २।२

१ उक्तो न शृणोतीत्यादिना । २ आमयेन दुःखेन सहितं सामयम् । नश्वरम् । ४ 'रूढिर्योगमपहरति' इति न्यायेनाह प्रसिद्धेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मकत्वावधारणात्, वर्ण एवाक्षरशब्द इति, एवं प्राप्त उच्यते—पर एवात्माऽक्षरशब्दवाच्यः । कस्मात् । अम्बरान्तधृतेः—पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तविकारजातस्य कालत्रयविभक्तस्य 'आकाश एव तदोतं च प्रोतं च' इत्याकाशे प्रतिष्ठितत्वमुक्त्वा 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यनेन प्रश्नेनेदमक्षरमवतारितम् । तथाचोपसंहृतम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इति । नचेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र संभवति । यदपि 'ॐकार एवेदं सर्वम्' इति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम् । तस्मान्न क्षरत्यश्नुते चेति नित्यत्वव्यापित्वाभ्याक्षरं परमेव ब्रह्म ॥ १० ॥

'स्यादेतत् कार्यस्य चेत्कारणाधीनत्वमम्बरान्तधृतिरभ्युपगम्यते, प्रधानकारणवादिनोऽपीयमुपपद्यते । कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिः । अत उत्तरं पठति—

## सा च प्रशासनात् ॥ ११ ॥

सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म । कस्मात् । प्रशासनात् । प्रशासनं हीह श्रूयते—'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' ( बृ० ३।८।९ ) इत्यादि । प्रशासनं च पारमेश्वरं कर्म । नाचेतनस्य प्रधानस्य प्रशासनं भवति । न ह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति ॥ ११ ॥

## अन्यभावव्यावृत्तेश्च ॥ १२ ॥

अन्यभावव्यावृत्तेश्च कारणाद्ब्रह्मैवाक्षरशब्दवाच्यम् । तस्यैवाम्बरान्तधृतिः कर्म नान्यस्य कस्य चित् । किमिदमन्यभावव्यावृत्तेरिति । अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभावव्यावृत्तिरिति । एतदुक्तं भवति—यदन्यद्ब्रह्मणोऽक्षरशब्दवाच्यमिहाशङ्क्यते तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः—'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ' ( बृ० ३।८।११ ) इति । तत्रेक्ष
त्वादिव्यपदेशः प्रधानस्यापि संभवति । द्रष्टृत्वादिव्यपदेशस्तु न
वत्यचेतनत्वात् । तथा 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ
दतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ' इत्यात्मभेदप्रतिषेधात्' न
रस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वम् । 'अचक्षुष्कमश्रोत्रमवाग
( बृ० ३।८।८ ) इति चोपाधिमत्ताप्रतिषेधात् । नहि निरुपा
शारीरो नाम भवति । तस्मात्परमेव ब्रह्माक्षरमिति निश्चयः ॥ १

## ४ ईक्षतिकर्मव्यपदेशाधिकरणम् । सू० १३

## ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥

'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद्विद्वानेते
तनेनैकतरमन्वेति' इति प्रकृत्य श्रूयते—'यः पुनरेतं त्रिमात्रेणो
तेनैवाक्षरेण परं पुरुषमभिध्यायीत' ( प्र० ५।२,५ ) इति ।
स्मिन्वाक्ये परं ब्रह्माभिध्यातव्यमुपदिश्यत आहोस्विदपरमिति ।
नैवायतनेन परमपरं चैकतरमन्वेतीति प्रकृतत्वात्संशयः । तत्रापर
ब्रह्मेति प्राप्तम् । कस्मात् । 'स तेजसि सूर्ये संपन्नः' 'स सामभि
यते ब्रह्मलोकम्' इति च तद्विदो देशपरिच्छिन्नस्य फलस्योच्यमान
नहि परब्रह्मविद्देशपरिच्छिन्नं फलमश्नुवीतेति युक्तम्, सर्वगतत्वा
ब्रह्मणः । नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते
दोषः । पिण्डापेक्षया प्राणस्य परत्वोपपत्तेः । इत्येवं प्राप्तेऽभिधी
परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते । कस्मात् । ईक्षतिकर्मव्यपदे
ईक्षतिर्दर्शनम् । दर्शनव्याप्यमीक्षतिकर्म । ईक्षतिकर्मत्वेनाभि
ध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति—'स एतस्मा
यनात्परात्परं पुरिशयं पुरुषमीक्षते' इति । तत्राभिध्यायतेरतथाभूत
वस्तु कर्म भवति । मनोरथकल्पितस्याप्यभिध्यायतिकर्मत्वा

१ परं निर्विशेषम्, अपरं कार्यम्, आयतनेन प्राप्तिसाधनेन, अन्वेति प्रा
२ अपरं ब्रह्म हिरण्यगर्भः । ३ पिण्डः स्थूलो विराट् तदपेक्षया सूत्रस्य पर
समाप्यर्थः । ४ व्याप्यं विषयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते । स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते । नन्वभिध्याने परः पुरुष उक्तः, ईक्षणे तु परात्परः, कथमितर इतरत्र प्रत्यभिज्ञायत इति । अत्रोच्यते—परपुरुषशब्दौ तावदुभयत्र साधारणौ । नचात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते, येन तस्मात्परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात् । कस्तर्हि जीवघन इति । उच्यते—घनो मूर्तिः । जीवलक्षणो घनो जीवघनः । सैन्धवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीवघन इति । अपर आह—'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते । जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्मलोकनिवासिनि संघातोपपत्तेर्भवति ब्रह्मलोको जीवघनः । तस्मात्परो यः परमात्मेक्षणकर्मभूतः स एवाभिध्यानेऽपि कर्मभूत इति गम्यते । परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्पते । परो हि पुरुषः परमात्मैव भवति यस्मात्परं किंचिदन्यन्नास्ति, 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति च श्रुत्यन्तरात् । 'परं चापरं च ब्रह्म यदोंकारः' इति च विभज्यानन्तरमोंकारेण परं पुरुषमभिध्यातव्यं ब्रुवन्परमेव ब्रह्म परं पुरुषं गमयति । 'यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुच्यते' इति पाप्मविनिर्मोकफलवचनं परमात्मानमिहाभिध्यातव्यं सूचयति । अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नफलं युज्यत इति । अत्रोच्यते—त्रिमात्रेणोंकारेणालम्बनेन परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भविष्यतीत्यदोषः ॥ १३ ॥

---

१ सैन्धवखिल्यो लवणपिण्डः, खिल्यभावोऽल्पत्वम् । २ पादोदरः सर्पः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ५ दहराधिकरणम्। सू० १४–२१

### दहर उत्तरेभ्यः ॥ १४ ॥

'अथ यदिदमस्मिन्ब्रह्मपुरे[1] दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्न
काशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्' (छा० ८।
इत्यादिवाक्यं समाम्नायते । तत्र योऽयं दहरे हृदयपुण्डरीके
आकाशः श्रुतः स किं भूताकाशोऽथवा विज्ञानात्माऽथवा परमा
संशय्यते । कुतः संशयः । आकाशब्रह्मपुरशब्दाभ्याम् । आ
शब्दो ह्ययं भूताकाशे परस्मिंश्च प्रयुज्यमानो दृश्यते । तत्र किं
काश एव दहरः स्यात्किंवा पर इति संशयः । यथा ब्रह्मपुरमि
जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरम्, अथवा परस्यैव ब्र
पुरं ब्रह्मपुरमिति । तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामिनो
राकाशत्वे संशयः । तत्राकाशशब्दस्य भूताकाशे रूढत्वाद्भू
एव दहरशब्द इति प्राप्तम् । तस्य च दहरायतनापेक्षया दहर
'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति च
भ्यन्तरभावकृतभेदस्योपमानोपमेयभावः, द्यावापृथिव्यादि च
न्नन्तः समाहितं, अवकाशात्मनाकाशस्यैकत्वात्, अथवा जीवो
इति प्राप्तम्, ब्रह्मपुरशब्दात् । जीवस्य हीदं पुरं सच्छरीरं ब्रह्म
त्युच्यते । तस्य स्वकर्मणोपार्जितत्वात् । भक्त्या[2] च तस्य ब्रह्मश
च्यत्वम् । नहि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः संबन्धोऽ
तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः । मनउपा
जीवः, मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयेऽ
स्थानं स्यात् । दहरत्वमपि तस्यैव आराग्रोपमितत्वादवकल्पते ।
शोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति । नचात्र दहरस्या
शस्यान्वेष्यत्वं विजिज्ञासितव्यत्वं च श्रूयते । 'तस्मिन्यदन्तः' इति

---

१ ब्रह्मपुरं शरीरं, दहरं सूक्ष्मं, पुण्डरीकं तदाकारत्वात्प्रकृतं हृदयमेव । तत्र
संनिधेर्वेश्मशब्दः । २ भक्त्या चैतन्यगुणयोगेन ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषणत्वेनोपादानादिति । अत उत्तरं ब्रूमः—परमेश्वर एवात्र दहराकाशो भवितुमर्हति न भूताकाशो जीवो वा । कस्मात् । उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः । तथाहि—अन्वेष्टव्यतया विहितस्य दहरस्याकाशस्य 'तं चेद्ब्रूयुः' इत्युपक्रम्य 'किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति । 'स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' ( छा० ८।१।३ ) इत्यादि । तत्र पुण्डरीकदहरत्वेन प्राप्तदहरत्वस्याकाशस्य प्रसिद्धाकाशौपम्येन दहरत्वं निवर्तयन्भूताकाशत्वं दहरस्याकाशस्य निवर्तयतीति गम्यते । यद्यप्याकाशशब्दो भूताकाशे रूढस्तथापि तेनैव तस्योपमा नोपपद्यत इति भूताकाशशङ्का निवर्तिता भवति । नन्वेकस्याप्याकाशस्य बाह्याभ्यन्तरत्वकल्पितेन भेदेनोपमानोपमेयभावः संभवतीत्युक्तम् । नैवं संभवति । अगतिका हीयं गतिः, यत्काल्पनिकभेदाश्रयणम् । अपिच कल्पयित्वापि भेदमुपमानोपमेयभावं वर्णयतः परिच्छिन्नत्वादभ्यन्तराकाशस्य न बाह्याकाशपरिमाणत्वमुपपद्येत । ननु परमेश्वरस्यापि 'ज्यायानाकाशात्' ( शत० ब्रा० १०।६।३।२ ) इति श्रुत्यन्तरान्नैवाकाशपरिमाणत्वमुपपद्यते । नैष दोषः । पुण्डरीकवेष्टनप्राप्तदहरत्वनिवृत्तिपरत्वाद्वाक्यस्य न तावत्त्वप्रतिपादनपरत्वम् । उभयप्रतिपादने हि वाक्यं भिद्येत । नच कल्पितभेदे पुण्डरीकवेष्टित आकाशैकदेशे द्यावापृथिव्यादीनामन्तःसमाधानमुपपद्यते । 'एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' इति चात्मत्वापहतपाप्मत्वादयश्च गुणा न भूताकाशे संभवन्ति । यद्यप्यात्मशब्दो जीवे संभवति तथापीतरेभ्यः कारणेभ्यो जीवाशङ्कापि निवर्तिता भवति । नह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्य जीवस्य पुण्डरीकवेष्टनकृतं दहरत्वं शक्यं निवर्तयितुम् । ब्रह्माभेदविवक्षया जीवस्य सर्वगतत्वादि विवक्ष्येतेति चेत् । यदात्म-

१ विगता जिघत्सा जग्धुमिच्छा यस्य । बुभुक्षाशून्य इत्यर्थः । २ दहरत्वं अल्पत्वम् । ३ आदिपदं सर्वाधारत्वादिसंग्रहार्थम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तया जीवस्य सर्वगतत्वादि विवक्ष्येत तस्यैव ब्रह्मणः साक्षात्सर्वगत्
विवक्ष्यतामिति युक्तम् । यदप्युक्तं ब्रह्मपुरमिति जीवेन परस्योप
त्वाद्राज्ञ इव जीवस्यैवेदं पुरस्वामिनः पुरैकदेशवर्तित्वमस्त्विति।
ब्रूमः—परस्यैवेदं ब्रह्मणः पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते, ब्रह्म
तस्मिन्मुख्यत्वात् । तस्याप्यस्ति पुरेणानेन संबन्धः, उपलब्ध्य
त्वात् । 'स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते' ( प्र०
'स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः' ( बृ० २।५।१८ ) इत्य
तिभ्यः । अथवा जीवपुर एवास्मिन्ब्रह्म संनिहितमुपलक्ष्यते ।
शालग्रामे विष्णुः संनिहित इति तद्वत् । 'तद्यथेह कर्मचितो लोकः
एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा० ८।१।६) इति च कर्म
न्तवत्फलत्वमुक्त्वा 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्या
स्तेषां सर्वेषु लोकेषु कामचारो भवति' इति प्रकृतदहराकाशविज्ञा
नन्तफलत्वं वदन्परमात्मत्वमस्य सूचयति । यदप्येतदुक्तं, न दहरा
शस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रुतं, परविशेषणत्वेनोपादान
अत्र ब्रूमः—यद्याकाशो नान्वेष्टव्यत्वेनोक्तः स्यात् 'यावान्वा अयमा
स्तावानेषोऽन्तर्हृदय आकाशः' इत्याद्याकाशस्वरूपप्रदर्शनं नोपयु
नन्वेतदप्यन्तर्वर्तिवस्तुसद्भावप्रदर्शनायैव प्रदर्श्यते । 'तं चेद्ब्रू
मस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं
विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यम्' इत्याक्षिप्य परिहा
आकाशौपम्योपक्रमेण द्यावापृथिव्यादीनामन्तःसमाहितत्वदर्शना
नैतदेवम् । एवं हि सति यदन्तःसमाहितं द्यावापृथिव्यादि तद
विजिज्ञासितव्यं चोक्तं स्यात् । तत्र वाक्यशेषो नोपपद्येत ।
न्कामाः समाहिताः' 'एष आत्माऽपहतपाप्मा' इति हि प्रकृतं
थिव्यादिसमाधानाधारमाकाशमाकृष्य 'अथ य इहात्मान
व्रजन्त्येतांश्च सत्यान्कामान्' इति समुच्चयार्थेन चशब्देनात्मानं

१ पूर्षु शरीरेषु, पुरि हृदये वा शेते इति पुरुषः । २ अनुविद्य ध्यानेन
३ समाहिताः प्रतिष्ठिताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ध्यारमाश्रितांश्च कामान्विज्ञेयान्वाक्यशेषो दर्शयति । तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानः सहान्तःस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च कामैर्विज्ञेय उक्त इति गम्यते । स चोक्तेभ्यो हेतुभ्यः परमेश्वर इति ॥ १४ ॥

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १५ ॥

दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम् । त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते । इतश्च परमेश्वर एव दहरः, यस्माद्दहरवाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः—'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' ( छा० ८।३।२ ) इति । तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानामभिधीयमाना दहरस्य ब्रह्मतां गमयति । तथा ह्यहरहर्जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे—'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इत्येवमादौ । लोकेऽपि किल गाढं सुषुप्तमाचक्षते ब्रह्मीभूतो ब्रह्मतां गत इति । तथा ब्रह्मलोकशब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशशङ्कां निवर्तयन्ब्रह्मतामस्य गमयति । ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् । गमयेद्यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्या व्युत्पाद्येत । सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति । एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम् । नह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम् ॥ १५ ॥

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥

धृतेश्च हेतोः परमेश्वर एवायं दहरः । कथम् । 'दहरोऽस्मिन्नन्तराकाशः' इति हि प्रकृत्याकाशौपम्यपूर्वकं तस्मिन्सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगं चोपदिश्य तमेवानतिवृत्तप्रकरणं निर्दिशति—'अथ य आत्मा स सेतुर्विधृतिरेष

१ सेतुरसंकरहेतुः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लोकानामसंभेदाय' ( छा० ८।४।१ ) इति । तत्र विधृतिरित्यात्म सामानाधिकरण्याद्विधारयितोच्यते, क्तिचः कर्तरि स्मरणात् । यथा संतानस्य विधारयिता लोके सेतुः क्षेत्रसंपदामसंभेदाय, एवमयमा पामध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारा सेतुरसंभेदायासंकरायेति । एवमिह प्रकृते दहरे विधारणलक्षणं मानं दर्शयति । अयं च महिमा परमेश्वर एव श्रुत्यन्तरादुपलभ्यते 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादेः । तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते—'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' इति । एवं धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ १६ ॥

## प्रसिद्धेश्च ॥ १७ ॥

इतश्च परमेश्वर एव 'दहरोऽस्मिन्नन्तराकाशः' इत्युच्यते । यत्कारण-माकाशशब्दः परमेश्वरे प्रसिद्धः । 'आकाशो वै नाम नामरूपयोर्निर्व-हिता' ( छा० ८।१४ ), 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' ( छा० १।९।१ ) इत्यादिप्रयोगदर्शनात् । जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते । भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धावुपमानोपमेयभावाद्यसंभवान्न ग्रहीतव्य इत्युक्तम् ॥ १७ ॥

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥

यदि वाक्यशेषबलेन दहर इति परमेश्वरः परिगृह्येतास्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः—'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' ( छा० ८।३।४ ) इति । अत्र हि संप्रसादशब्दः श्रुत्यन्तरे सुषुप्तावस्थायां दृष्टत्वात्तदवस्थावन्तं जीवं शक्नोत्युपस्थापयितुं

१ आसमन्तात्काशते दीप्यत इत्याकाशः स्वयंज्योतिरीश्वरः । २ सम्यक् प्रसी-दत्यस्मिञ्जीवो विषयेन्द्रियसंयोगजनितं कालुष्यं जहातीति सुषुप्तिः, संप्रसादो जीवस्यावस्थाभेदः । ३ 'संप्रसादे रत्वा चरित्वा' इति बृहदारण्यकस्थं श्रुत्यन्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लम् । तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं संभवति । यथाकाशव्यपाश्रयाणां वाय्वादीनामाकाशात्समुत्थानं तद्वत् । यथा चादृष्टोऽपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमभिव्याहारात् 'आकाशो वै नाम नामरूपयोर्निर्वहिता' इत्येवमादौ परमेश्वरविषयोऽभ्युपगत एवं जीवविषयोऽपि भविष्यति । तस्मादितरपरामर्शात् 'दहरोऽस्मिन्नन्तराकाश' इत्यत्र स एव जीव उच्यत इति चेत् । नैतदेवं स्यात् । कस्मात् । असंभवात् । नहि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन्नाकाशेनोपमीयेत । नचोपाधिधर्मानभिमन्यमानस्यापहतपाप्मत्वादयो धर्माः संभवन्ति । प्रपञ्चितं चैतत्प्रथमसूत्रे । अतिशङ्कापरिहारायात्र तु पुनरुपन्यस्तम् । पठिष्यति चोपरिष्टात् 'अन्यार्थश्च परामर्शः' ( ब्र० १।३।२० ) इति ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥

इतरपरामर्शाद्या जीवाशङ्का जाता साऽसंभवान्निराकृता । अथेदानीं मृतस्येवामृतसेकात्पुनः समुत्थानं जीवाशङ्कायाः क्रियते उत्तरस्मात्प्राजापत्याद्वाक्यात् । तत्रहि 'य आत्मापहतपाप्मा' इत्यपहतपाप्मत्वादिगुणकमात्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा' ( छा० ८।७।४ ) इति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३ ) इति च तमेव पुनः पुनः परामृश्य 'य एष स्वप्ने महीयमानश्चरत्येष आत्मा' ( छा० ८।१०।१ ) इति 'तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मा' इति च जीवमेवावस्थान्तरगतं व्याचष्टे । तस्यैव चापहतपाप्मत्वादि दर्शयति—'एतदमृतमभयमेतद्ब्रह्म' इति । नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि

१ उपाधिधर्माः पाप्मादयः । २ उत्तराच्चेत्यधिकाशङ्कानिरासार्थम् । ३ महीयमानो वासनामयैर्विषयैः पूज्यमान इति स्वप्नपर्याये, तद्यत्रेति सुषुप्तिपर्याये च जीवमेव प्रजापतिर्व्याचष्ट इत्यन्वयः । ४ अहेति निपातः खेदे ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भूतानि' ( छा० ८।११।१,२ ) इति च सुषुप्तावस्थायां दोष...
'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इति स्था...
क्रम्य शरीरसंबन्धनिन्दापूर्वकं 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय पर...
ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति ...
शरीरात्समुत्थितमुत्तमपुरुषं दर्शयति । तस्मादस्ति संभवो जीवे ...
श्वराणां धर्माणाम् । अतः 'दहरोऽस्मिन्नन्तराकाशः' इति जीव ...
इति चेत्कश्चिद्ब्रूयात्, तं प्रति ब्रूयात्—'आविर्भूतस्वरूपस्तु' ...
तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । नोत्तरस्मादपि वाक्यादिह जीव...
संभवतीत्यर्थः । कस्मात् । यतस्तत्राप्याविर्भूतस्वरूपो जीवो विव...
आविर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः । भूतपूर्वगत्या जीववचन...
एतदुक्तं भवति—'य एषोऽक्षिणि' इत्यक्षिलक्षितं द्रष्टारं निर्दिश्य...
रावब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्य 'एतं त्वेव ते' इति पुन...
मेव व्याख्येयत्वेनाकृष्य स्वप्नसुषुप्तोपन्यासक्रमेण 'परं ज्योति...
स्वेन रूपेणाभिनिष्पद्यते' इति यदस्य पारमार्थिकं स्वरूपं परं ब्र...
पतयैनं जीवं व्याचष्टे न जैवेन रूपेण । यत्परं ज्योतिरुपसंपत्तव्यं...
तत्परं ब्रह्म । तच्चापहतपाप्मत्वादिधर्मकं, तदेव च जीवस्य पारमा...
स्वरूपं 'तत्त्वमसि' इत्यादिशास्त्रेभ्यः, नेतरदुपाधिकल्पितम् । ...
हि स्थाणाविव पुरुषबुद्धिं द्वैतलक्षणामविद्यां निवर्तयन्कूटस्थनित्य...
रूपमात्मानमहं ब्रह्मास्मीति न प्रतिपद्यते तावज्जीवस्य जीवत्वम् ...
तु देहेन्द्रियमनोबुद्धिसंघाताद्व्युत्थाप्य श्रुत्या प्रतिबोध्यते, ...
देहेन्द्रियमनोबुद्धिसंघातः, नासि संसारी, किं तर्हि तद्यत्सत्यं स ...
चैतन्यमात्रस्वरूपस्तत्त्वमसीति, तदा कूटस्थनित्यदृक्स्वरूपमात्मानं ...
बुध्यास्माच्छरीराद्यभिमानात्समुत्तिष्ठन्स एव कूटस्थनित्यदृक्स्वरूप...
भवति । 'स यो ह वैतत्परमं ब्रह्म वेद ब्रह्मैव भवति' (मुण्ड० ...

---

१ एतस्मात्प्रकृतादात्मनोऽन्यत्र अन्यम् । २ उदशरावेति उदकपूर्णे शरावे...
स्वात्मानं देहं दृष्ट्वा स्वसाक्षातं यत्तन्मन्यं वाच्यमित्युक्तः श्रुत्यर्थः । ३ व्युत्थाप्य ...
४ अभिनिष्पद्यत इत्यत्र एतदुक्तं भवतीति संबन्धः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादिश्रुतिभ्यः । तदेव चास्य पारमार्थिकं स्वरूपं येन शरीरात्समुत्थाय स्वेन रूपेणाभिनिष्पद्यते । कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति संभवति कूटस्थनित्यस्य । सुवर्णादीनां तु द्रव्यान्तरसंपर्कादभिभूतस्वरूपाणामनभिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्पत्तिः स्यात् । तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः स्यात् । नतु तथात्मचैतन्यज्योतिषो नित्यस्य केनचिदभिभवः संभवत्यसंसर्गित्वाद्व्योम्न इव, दृष्टविरोधाच्च । दृष्टिश्रुतिमतिविज्ञातयो हि जीवस्य स्वरूपम् । तच्च शरीरादसमुत्थितस्यापि जीवस्य सदा निष्पन्नमेव दृश्यते । सर्वो हि जीवः पश्यञ्शृण्वन्मन्वानो विजानन्व्यवहरत्यन्यथा व्यवहारानुपपत्तेः । तच्चेच्छरीरात्समुत्थितस्य निष्पद्येत प्राक्समुत्थानाद्दृष्टो व्यवहारो विरुध्येत । अतः किमात्मकमिदं शरीरात्समुत्थानं, किमात्मिका वा स्वरूपेणाभिनिष्पत्तिरिति । अत्रोच्यते—प्राग्विवेकविज्ञानोत्पत्तेः शरीरेन्द्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिव जीवस्य दृष्ट्यादिज्योतिःस्वरूपं भवति । यथा शुद्धस्य स्फटिकस्य स्वाच्छ्यं शौक्ल्यं च स्वरूपं प्राग्विवेकग्रहणाद्रक्तनीलाद्युपाधिभिरविविक्तमिव भवति । प्रमाणजनितविवेकग्रहणात्तु पराचीनः स्फटिकः स्वाच्छ्येन शौक्ल्येन च स्वेन रूपेणाभिनिष्पद्यत इत्युच्यते प्रागपि तथैव सन् । तथा देहाद्युपाध्यविविक्तस्यैव सतो जीवस्य श्रुतिकृतं विवेकविज्ञानं शरीरात्समुत्थानं विवेकविज्ञानफलं स्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिः । तथा विवेकाविवेकमात्रेणैवात्मनोऽशरीरत्वं सशरीरत्वं च, मन्त्रवर्णात् 'अशरीरं शरीरेषु' ( का० १।२।२२ ) इति, 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' ( गी० १३।३१ ) इति च सशरीरत्वाशरीरत्वविशेषाभावस्मरणात् । तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन्विवेकविज्ञानादाविर्भूतस्वरूप इत्युच्यते ।

---

१ अभिभावकः सौरालोकस्तद्वियोगे । २ वेदना हर्षशोकादयः । ३ विवेकविज्ञानं त्वंपदार्थशोधनम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नत्वन्यादृशावाविर्भावानाविर्भावौ स्वरूपस्य संभवतः स्वरूपत्वादेक
एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदो न वस्तुकृतः, व्योमवद
संङ्गत्वाविशेषात् । कुतश्चैतदेवं प्रतिपत्तव्यम् । यतो 'य एषोऽक्षि
पुरुषो दृश्यते' इत्युपदिश्य 'एतदमृतमभयमेतद्ब्रह्म' इत्युपदिश
योऽक्षिणि प्रसिद्धो द्रष्टा द्रष्टृत्वेन विभाव्यते सोऽमृताभयलक्षणाद्ब्र
ऽन्यश्चेत्स्यात्ततोऽमृताभयब्रह्मसामानाधिकरण्यं न स्यात् । नापि प्र
यात्मायमक्षिलक्षितो निर्दिश्यते, प्रजापतेर्मृषावादित्वप्रसङ्गात् ।
द्वितीयेऽपि पर्याये 'य एषः स्वप्ने महीयमानश्चरति' इति न प्रथम
निर्दिष्टादक्षिपुरुषाद्द्रष्टुरन्यो निर्दिष्टः, 'एतं त्वेव ते भूयोऽनुव्या
स्यामि' इत्युपक्रमात् । किंचाहमद्य स्वप्ने हस्तिनमद्राक्षं नेदा
पश्यामीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे । द्रष्टारं तु तमेव प्रत्यभि
य एवाहं स्वप्नमद्राक्षं स एवाहं जागरितं पश्यामीति । तथा तृ
पर्याये 'नहि खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति
नानि भूतानि' इति सुषुप्तावस्थायां विशेषविज्ञानाभावमेव दर्श
विज्ञातारं प्रतिषेधति । यत्तु तत्र 'विनाशमेवापीतो भवति' इ
विशेषविज्ञानविनाशाभिप्रायमेव न विज्ञातृविनाशाभिप्रायम्, 'न
विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात्' ( बृ० ४।३।३
श्रुत्यन्तरात् । तथा चतुर्थेऽपि पर्याये 'एतं त्वेव ते भूयोऽनु
स्यामि नो एवान्यत्रैतस्मात्' इत्युपक्रम्य 'मघवन्मर्त्यं वा इदं
इत्यादिना प्रपञ्चेन शरीराद्युपाधिसंबन्धप्रत्याख्यानेन संप्रसाद
जीवं 'स्वेन रूपेणाभिनिष्पद्यते' इति ब्रह्मस्वरूपापन्नं दर्शयन्न प
ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयति । केचित्तु परमात्म
'एतं त्वेव ते' इति जीवाकर्षणमन्याय्यं मन्यमाना एतमेव
क्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं ते भूयोऽनुव्याख्या

१ अन्यादृशौ सत्यौ । २ अंशादिशून्यत्वमसङ्गत्वम् । ३ अयं सुषुप्तः, संप्र
अहं आत्मानं अहंकारास्पदमात्मानं न जानाति । ४ नहीति आत्मनः स्वभा
र्मेर्नान्यथाभावो योग्यत्वादित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कल्पयन्ति । तेषामेतमिति संनिहितावलम्बिनी सर्वनामश्रुतिर्विप्रकृष्येत । भूयःश्रुतिश्चोपरुध्येत, पर्यायान्तराभिहितस्य पर्यायान्तरेऽनभिधीयमानत्वात् । 'एतं त्वेव ते' इति च प्रतिज्ञाय प्राक्चतुर्थात्पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत । तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृभोक्तृरागद्वेषादिदोषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपाद्यते, सर्पादिविलयनेनेव रज्ज्वादीन् । अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्तेऽस्मदीयाश्च केचित् । तेषां सर्वेषामात्मैकत्वसम्यग्दर्शनप्रतिपक्षभूतानां प्रतिबोधायेदं शारीरकमारब्धम् । एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया मायाविवदनेकधा विभाव्यते नान्यो विज्ञानधातुरस्तीति । यत्त्विदं परमेश्वरवाक्ये जीवमाशङ्क्य प्रतिषेधति सूत्रकारः—'नासंभवात्' (ब्र० १।३।१८) इत्यादिना । तत्रायमभिप्रायः—नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्ये एकस्मिन्नसङ्गे परमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादि परिकल्पितम् । तदात्मैकत्वप्रतिपादनपरैर्वाक्यैर्न्यायोपेतैर्द्वैतवादप्रतिषेधैश्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति । जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिषति किं त्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदम् । एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः कर्मविधयो न विरुध्यन्त इति मन्यते । प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति—'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र० १।१।३०) इत्यादिना । वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ २० ॥

अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः—'अथ य एष संप्रसादः' (छा० ८।३।४) इत्यादिः, स दहरे परमेश्वरे व्याख्याय-

---

१ विलयनेन शोधनेन । २ विद्यया महावाक्येन । ३ वाक्यानि तत्त्वमस्यादीनि जीवब्रह्मणोश्चैतन्याविशेषात्तदाकारेणाकारान्तरेण वा । भेदायोगो न्यायः । नेहनानेत्यादयो द्वैतवादप्रतिषेधाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं तीति । अत आह—अन्यार्थोऽयं जीवपरामर्शो न जीवस्वरूप सायी किं तर्हि परमेश्वरस्वरूपपर्यवसायी । कथम् । संप्रसाद दितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा निर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तः शरणं प्रेप्सुरुभय शरीराभिमानात्समुत्थाय सुषुप्तावस्थायां परं ज्योतिराकाशशब्दि ब्रह्मोपसंपद्य विशेषविज्ञानवत्त्वं च परित्यज्य स्वेन रूपेणाभिनिष्प यदस्योपसंपत्तव्यं परं ज्योतिर्येन स्वेन रूपेणायमभिनिष्पद्यते स आत्माऽपहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः मेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥

यदप्युक्तम्, 'दहरोऽस्मिन्नन्तराकाशः' इत्याकाशस्याल्पत्वं परमेश्वरे नोपपद्यते, जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पते तस्य परिहारो वक्तव्यः । उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षि त्वमवकल्पत इति 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचा देवं व्योमवच्च' (ब्र० १।२।७) इत्यत्र । स एवेह परिहारो तव्य इति सूचयति । श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशे मानया 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इति

## ६ अनुकृत्यधिकरणम् । सू० २२–२३

## अनुकृतेस्तस्य च ॥ २२ ॥

'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति मग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं (मु० २।२।१०) इति समामनन्ति । यत्र यं भान्तमनुभाति यस्य च भासा सर्वमिदं विभाति स किं तेजोधातुः कश्चिदुत आत्मेति विचिकित्सायां तेजोधातुरिति तावत्प्राप्तम् । कुतः,

१ तत्र तारकान्तराणि चन्द्रादि च न भाति तं न भासयतीति यावत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नामेव सूर्यादीनां भानप्रतिषेधात् । तेजःस्वभावकं हि चन्द्रतारकादि तेजःस्वभावक एव सूर्ये भासमानेऽहनि न भासत इति प्रसिद्धम् । तथा सह सूर्येण सर्वमिदं चन्द्रतारकादि यस्मिन्न भासते सोऽपि तेजःस्वभाव एव कश्चिदित्यवगम्यते । अनुभानमपि तेजःस्वभावक एवोपपद्यते, समानस्वभावकेष्वनुकारदर्शनात् । गच्छन्तमनुगच्छतीतिवत् । तस्मात्तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः—प्राज्ञ एवात्मा भवितुमर्हति । कस्मात् । अनुकृतेः । अनुकरणमनुकृतिः । यदेतत् 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभानं, तत्प्राज्ञपरिग्रहेऽवकल्पते । 'भारूपः सत्यसंकल्पः' ( छा० ३।१४।२ ) इति हि प्राज्ञमात्मानमामनन्ति । न तु तेजोधातुं कंचित्सूर्यादयोऽनुभान्तीति प्रसिद्धम् । समत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षास्ति यं भान्तमनुभायुः । न हि प्रदीपः प्रदीपान्तरमनुभाति । यदप्युक्तं समानस्वभावकेष्वनुकारो दृश्यत इति । नायमेकान्तो नियमः । भिन्नस्वभावकेष्वपि ह्यनुकारो दृश्यते । यथा सुतप्तोऽयःपिण्डोऽग्न्यनुकृतिरग्निं दहन्तमनुदहति, भौमं वा रजो वायुं वहन्तमनुवहतीति । अनुकृतेरित्यनुभानमसूसुचत् । तस्य चेति चतुर्थं पादमस्य श्लोकस्य सूचयति । 'तस्य भासा सर्वमिदं विभाति' इति, तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति । 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' ( बृ० ४।४।१६ ) इति हि प्राज्ञमात्मानमामनन्ति । तेजोन्तरेण सूर्यादितेजो विभातीत्यप्रसिद्धं विरुद्धं च, तेजोन्तरेण तेजोन्तरस्य प्रतिघातात् । अथवा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते । किं तर्हि 'सर्वमिदम्' इत्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याभिव्यक्तिः सा ब्रह्मज्योतिःसत्तानिमित्ता । यथा सूर्यादिज्योतिःसत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिस्तद्वत् । 'न तत्र सूर्यो भाति' इति च तत्रशब्दमाहरत्प्रकृतग्रहणं दर्शयति । प्रकृतं च ब्रह्म 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतम्' ( मु० २।२।५ ) इत्यादिना । अनन्तरं च

१ प्राज्ञत्वं स्वप्रकाशकत्वं भासकत्वार्थमुक्तम् । २ अनुकारः अनुभानम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां
स्तद्यदात्मविदो विदुः' इति । कथं तज्ज्योतिषां ज्योतिरित्यत इदमुक्तं
'न तत्र सूर्यो भाति' इति । यदप्युक्तं सूर्यादीनां तेजसां भानप्र
धस्तेजोधातावेवान्यस्मिन्नवकल्पते सूर्य इवेतरेषामिति । तत्र तु
तेजोधातुरन्यो न संभवतीत्युपपादितम् । ब्रह्मण्यपि चैषां भानप्रति
ऽवकल्पते । यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते,
तु नान्येन ज्योतिषोपलभ्यते स्वयं ज्योतिःस्वरूपत्वात्, येन सू
स्तस्मिन्भायुः । ब्रह्म ह्यन्यद्व्यनक्ति नतु ब्रह्मान्येन व्यज्यते । 'आत्म
ज्योतिषास्ते' ( बृ० ४।३।६ ), 'अगृह्यो नहि गृह्यते' ( बृ० ४।
इत्यादिश्रुतिभ्यः ॥ २२ ॥

## अपिच स्मर्यते ॥ २३ ॥

अपिचेदृग्रूपत्वं प्राज्ञस्यैवात्मनः स्मर्यते भगवद्गीतासु—'न तद्
सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम प
(गी० १५।६) इति, 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
मसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' (गी० १५।१२) इति च

## ७ प्रमिताधिकरणम् । सू० २४–२५

## शब्दादेव प्रमितः ॥ २४ ॥

'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति श्रूयते ।
ङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स
उ श्व एतद्वै तत्' ( का० २।४।१३ ) इति च । तत्र योऽयमङ्गु
पुरुषः श्रूयते स किं विज्ञानात्मा किंवा परमात्मेति संशयः
परिमाणोपदेशात्तावद्विज्ञानात्मेति प्राप्तम् । नह्यनन्तायामविस्ता
मात्मनोऽङ्गुष्ठपरिमाणमुपपद्यते । विज्ञानात्मनस्तूपाधिमत्त्वा

---

१ विरजं आगन्तुकमलशून्यम् । शुभ्रं नैसर्गिकमलशून्यम् । २ आत्मवि
हृदयसद्मनीत्यर्थः । ३ भूतभव्यग्रहणं भवतोऽपि प्रदर्शनार्थम् । ४ कालत्रयनि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कयाचित्कल्पनयाङ्गुष्ठमात्रत्वम् । स्मृतेश्च—'अथ सत्यवतः कायात्पाशबद्धं वशं गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥' ( म० भा० ३।२९७।१७ ) इति । नहि परमेश्वरो बलाद्यमेन निष्क्रष्टुं शक्यस्तेन तत्र संसार्यङ्गुष्ठमात्रो निश्चितः स एवेहापीत्येवं प्राप्ते ब्रूमः—परमात्मैवायमङ्गुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति । कस्मात्, शब्दात्, 'ईशानो भूतभव्यस्य' इति । नह्यन्यः परमेश्वराद्भूतभव्यस्य निरङ्कुशमीशिता । 'एतद्वै तत्' इति च प्रकृतं पृष्टमिहानुसंदधाति । एतद्वै तद्यत्पृष्टं ब्रह्मेत्यर्थः । पृष्टं चेह ब्रह्म 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' ( का० १।२।१४ ) इति शब्दादेवेत्यभिधानश्रुतेरेवेशान इति परमेश्वरोऽयं गम्यत इत्यर्थः ॥२४॥

कथं पुनः सर्वगतस्य परमात्मनः परिमाणोपदेश इत्यत्र ब्रूमः—

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥

सर्वगतस्यापि परमात्मनो हृदयेऽवस्थानमपेक्ष्याङ्गुष्ठमात्रत्वमिदमुच्यते । आकाशस्येव वंशपर्वापेक्षमरत्निमात्रत्वम् । नह्यञ्जसातिमात्रस्य परमात्मनोऽङ्गुष्ठमात्रत्वमुपपद्यते । न चान्यः परमात्मन इह ग्रहणमर्हतीशानशब्दादिभ्य इत्युक्तम् । ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यङ्गुष्ठमात्रत्वं नोपपद्यत इत्यत उत्तरमुच्यते—मनुष्याधिकारत्वादिति । शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति, शक्तत्वादर्थित्वादपर्युदस्तत्वादुपनयनादिशास्त्राच्चेति वर्णितमेतदधिकारलक्षणे ( जै० ६।१ ) । मनुष्याणां च नियतपरिमाणः कायः । औचित्येन नियतपरिमाणमेव चैषामङ्गुष्ठमात्रं हृदयम् । अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमङ्गुष्ठमात्रत्वमुपपन्नं परमात्मनः । यदप्युक्तं परिमाणोपदेशात्स्मृतेश्च संसार्येवायमङ्गुष्ठमात्रः प्रत्येतव्य इति, तत्प्रत्युच्यते—'स आत्मा तत्त्वमसि' इत्यादिवत्संसारिण एव सतो-

---

१ कयाचिदिति हृदयकमलकोशस्य जीवोपलब्धिस्थानस्याङ्गुष्ठमात्रतयेत्यर्थः । २ सङ्कुष्टः करोऽरत्निः । ३ अत्र मनुष्यशब्दस्त्रैवर्णिकपरः । ४ 'शूद्रो यज्ञेऽनवक्लृप्तः' इति पर्युदासात्, 'उपनयीत, तमध्यापयीत' इति शूद्राधिकारवारणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽङ्गुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति । द्विरूपा हि वेदान्तवाक्य-प्रवृत्तिः, क्वचित्परमात्मस्वरूपनिरूपणपरा क्वचिद्विज्ञानात्मनः परमात्मै-कत्वोपदेशपरा । तदत्र विज्ञानात्मनः परमात्मनैकत्वमुपदिश्यते नाङ्गु-ष्ठमात्रत्वं कस्यचित् । एवमेवार्थं परेण स्फुटीकरिष्यति—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृ-हेन्मुञ्जादिवेषिकां धैर्येण । तं विद्याच्छुक्रममृतम्' (का० २।६।१७) इति ॥ २५ ॥

## ८ देवताधिकरणम् । सू० २६–३३

### तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

अङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षया मनुष्याधिकारत्वाच्छास्त्रस्य इत्युक्तम् । तत्प्रसङ्गेनेदमुच्यते । बाढं मनुष्यानधिकरोति शास्त्रम् । न तु मनुष्यानेवे-तीह ब्रह्मज्ञाने नियमोऽस्ति । तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तानप्य-धिकरोति शास्त्रमिति बादरायण आचार्यो मन्यते । कस्मात् । संभवात् । संभवति हि तेषामप्यर्थित्वाद्यधिकारकारणम् । तत्रार्थित्वं तावन्मोक्षविषयं देवादीनामपि संभवति विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तम् । तथा सामर्थ्यमपि तेषां संभवति, मन्त्रार्थवादेतिहासपुराणलोकेभ्यो विग्रहवत्त्वाद्यवगमात् । नच तेषां कश्चित्प्रतिषेधोऽस्ति । नचोपनयन-शास्त्रेणैषामधिकारो निवर्त्येत, उपनयनस्य वेदाध्ययनार्थत्वात् । तेषां च स्वयंप्रतिभातवेदत्वात् । अपिचैषां विद्याग्रहणार्थं ब्रह्मचर्यादि दर्शयति—'एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास' (छा० ८।११।३), 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म' (तै० ३।१) इत्यादि । यदपि कर्मस्वनधिकारकारणमुक्तम्—'न[2] देवानां देवतान्तराभावात्' इति, 'न ऋषीणामार्षेयान्तराभावात्' इति,

---

१ शरीरात्स्थूलात्सूक्ष्माच्च तं जीवं प्रवृहेत्पृथक्कुर्यात् । धैर्येण शमादिनेति ।
२ देवानां कर्मसु नाधिकारः, देवतान्तराणामुद्देश्यानामभावादिति प्रथमसूत्रार्थः । ऋषीणामपि न, ऋष्यन्तराभावाद्दपियुक्ते कर्मण्यशक्तेरिति द्वितीयसूत्रार्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(जै० ६।१।६,७) इति । न तद्विद्यास्वस्ति । नहीन्द्रादीनां विद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेन किंचित्कृत्यमस्ति । नच भृग्वादीनां भृग्वादिसगोत्रतया । तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्येत । देवाद्यधिकारेऽप्यङ्गुष्ठमात्रश्रुतिः स्वाङ्गुष्ठापेक्षया न विरुध्यते ॥ २६ ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥**

स्यादेतत्, यदि विग्रहवत्त्वाद्यभ्युपगमेन देवादीनां विद्यास्वधिकारो र्ण्येत । विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपि स्वरूपसंनिधानेन कर्माङ्गभावोऽभ्युपगम्येत । तदा च विरोधः कर्मणि स्यात् । नहीन्द्रादीनां स्वरूपसंनिधानेन यागेऽङ्गभावो दृश्यते । नच संभवति । बहुषु यागेषु ुगपदेकस्येन्द्रस्य स्वरूपसंनिधानतानुपपत्तेरिति चेत् । नायमस्ति विरोधः । कस्मात्[1] । अनेकप्रतिपत्तेः । एकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति । कथमेतदवगम्यते । दर्शनात्[2] । तथाहि—कति[3] देवाः' इत्युपक्रम्य 'त्रयश्च त्री च शता त्रयश्च त्री च सहस्रा' इति निरुच्य 'कतमे ते' इत्यस्यां पृच्छायाम् 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' (बृ० ३।९।१,२) इति निर्ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति । तथा त्रयस्त्रिंशतोऽपि षडाद्यन्तर्भावक्रमेण 'कतम एको देव इति प्राणः' इति प्राणैकरूपतां देवानां दर्शयन्ती तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति । तथा स्मृतिरपि— आत्मनो वै शरीराणि बहूनि भरतर्षभ ॥ योगी कुर्याद्बलं[4] प्राप्य तैश्च र्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् ॥ संक्षिपेच्च नस्तानि सूर्यो रश्मिगणानिव ॥' इत्येवंजातीयका प्राप्ताणिमाद्यैश्वर्याणां[5] ोगिनामपि युगपदनेकशरीरयोगं दर्शयति । किमु वक्तव्यमाजानसि-[6]

---

१ तत् असामर्थ्यरूपं कारणम् । २ दर्शनात् श्रुतिप्रामाण्यात् । ३ वैश्वदेवशस्त्रस्य निविदि कति देवा इत्युपक्रम्य शाकल्याय याज्ञवल्क्येन त्रयश्चेत्युत्तरम् । निविन्नाम स्यमानदेवतासंख्यावाचकानि मन्त्रपदानि । ४ बलं योगसिद्धिम् । ५ 'अणिमा हिमा चैव गरिमा प्राप्तिरीशिता । प्राकाम्यं च वशित्वं च यत्र कामावसायिता ॥' इत्यमाद्याः । ६ आजानसिद्धानां जन्मनैव प्राप्तातिशयानाम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्धानां देवानाम् । अनेकरूपप्रतिपत्तिसंभवाच्चैकैका देवता बहुभी
रात्मानं प्रविभज्य बहुषु यागेषु युगपदङ्गभावं गच्छतीति ।
दृश्यतेऽन्तर्धानादिक्रियायोगादित्युपपद्यते । अनेकप्रतिपत्तेर्दर्शनादि
परा व्याख्या—विग्रहवतामपि कर्माङ्गभावचोदनास्वनेका प्रति
श्यते । क्वचिदेकोऽपि विग्रहवाननेकत्र युगपदङ्गभावं न गच्छति,
बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते । क्वचिच्चैकोऽपि
ननेकत्र युगपदङ्गभावं गच्छति, यथा बहुभिर्नमस्कुर्वाणैरेको
युगपन्नमस्क्रियते । तद्वदिहोद्देशपरित्यागात्मकत्वाद्यागस्य
प्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्यक्ष्यन्तीति
हवत्त्वेऽपि देवतानां न किंचित्कर्मणि विरुध्यते ॥ २७ ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥**

मा नाम विग्रहवत्त्वे देवादीनामभ्युपगम्यमाने कर्मणि क
प्रसञ्जि । शब्दे तु विरोधः प्रसज्येत । कथम् । औत्पत्तिकं[1]
स्यार्थेन संबन्धमाश्रित्य 'अनपेक्षत्वात्' इति वेदस्य प्रामाण्यं
तम् । इदानीं तु विग्रहवती देवताभ्युपगम्यमाना यद्यप्यैश्वर्य
पदनेककर्मसंबन्धीनि हवींषि भुञ्जीत तथापि विग्रहयोगादस्म
ननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्ये संबन्धे
माने यद्वैदिके शब्दे प्रामाण्यं स्थितं तस्य विरोधः स्यादिति
नायमप्यस्ति विरोधः । कस्मात् । अतः प्रभवात् । अतएव हि
च्छब्दाद्देवादिकं जगत्प्रभवति । ननु 'जन्माद्यस्य यतः' (ब्र० १
इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवधारितं, कथमिह शब्दप्रभवत्वं[2]
अपिच यदि नाम वैदिकाच्छब्दादस्य प्रभवोऽभ्युपगतः, कथं
विरोधः शब्दे परिहृतः, यावता वसवो रुद्रा आदित्या विश्वेदेवा
इत्येतेऽर्था अनित्या एवोत्पत्तिमत्त्वात् । तदनित्यत्वे च त

---

१ औत्पत्तिकं स्वाभाविकम् । २ वस्वादिजातिवाचकाच्छब्दात्तज्जातीयां
व्यक्तिं बुद्धावालिख्य तस्याः प्रभवनं, तदिदं तत्प्रभवत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वैदिकानां वस्वादिशब्दानामनित्यत्वं केन निवार्यते । प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति । तस्माद्विरोध एव शब्द इति चेत् । न । गवादिशब्दार्थसंबन्धनित्यत्वदर्शनात् । नहि गवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वं स्यात् । द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते नाकृतयः । आकृतिभिश्च शब्दानां संबन्धो न व्यक्तिभिः । व्यक्तीनामानन्त्यात्संबन्धग्रहणानुपपत्तेः । व्यक्तिषूत्पद्यमानास्वप्याकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरोधो दृश्यते । तथा देवादिव्यक्तिप्रभवाभ्युपगमेऽप्याकृतिनित्यत्वान्न कश्चिद्वस्वादिशब्देषु विरोध इति द्रष्टव्यम् । आकृतिविशेषस्तु देवादीनां न्त्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगन्तव्यः । स्थानविशेषसंबन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत् । ततश्च यो यस्तत्तत्स्थानधिरोहति स स इन्द्रादिशब्दैरभिधीयत इति न दोषो भवति । नचेदं शब्दप्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणाभिप्रायेणोच्यते । कथं तर्हि स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसंबन्धिनि शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिः । अतः प्रभव इत्युच्यते, कथं पुनरवगम्यते शब्दाप्रभवति जगदिति । प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं श्रुतिः, प्रामाण्यं प्रत्यनपेक्षत्वात् । अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वात् । ते हि शब्दपूर्वां सृष्टिं दर्शयतः । 'एते इति वै प्रजापतिर्देवानसृजतासृग्रमिति नुष्यानिन्दव इति पितॄंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वानीति शस्त्रमभिसौभगेत्यन्याः प्रजाः' इति श्रुतिः । तथान्यत्रापि 'स नसा वाचं मिथुनं समभवत्' ( बृ० १।२।४ ) इत्यादिना तत्रतत्र

---

१ आकृतीनां जातीनाम् । २ 'एते असृग्रमिन्दवस्तिरःपवित्रमाशवः । विश्वान्यभिसौभगा' इति । एतन्मन्त्रस्थैः पदैः स्मृत्वा ब्रह्मा देवादीनसृजत । तत्र संनिहितवाचतच्छब्दो देवानां करणेष्वनुग्राहकत्वेन संनिहितानां स्मारकः । असृक् रुधिरं तत्प्रधादेहरमणान्मनुष्याणामसृग्रशब्दस्मारकः । चन्द्रस्थानां पितॄणामिन्दुशब्दः स्मारकः । वित्रं सोमं स्वान्तस्तिरस्कुर्वतां ग्रहाणां तिरःपवित्रशब्दः स्मारकः । ऋचोऽश्नुवतां तोत्राणामाशुशब्दः स्तोत्रानन्तरं प्रयोगं विशतां शस्त्राणां विश्वशब्दः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दपूर्विका सृष्टिः श्राव्यते । स्मृतिरपि—'अनादिनिधना नित्या पूर्व
त्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः'
इति । उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनात्मको द्रष्टव्यः, अनादि
धनाया अन्यादृशस्योत्सर्गस्यासंभवात् । तथा 'नाम रूपं च भूत
कर्मणां च प्रवर्तनम् । वेदशब्देभ्य एवादौ निर्ममे स महेश्वरः'
(मनु० १।२१) इति । 'सर्वेषां तु स नामानि कर्माणि च पृ
थक् । वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥' इति च ।
चिकीर्षितमर्थमनुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थं
ष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् । तथा प्रजापतेरपि स्रष्टुः सृष्टेः
वैदिकाः शब्दा मनसि प्रादुर्बभूवुः, पश्चात्तदनुगतानर्थान्
गम्यते । तथाच श्रुतिः—'स भूरिति व्याहरत्स भूमिम
(तै० ब्रा० २।२।४।२) इत्येवमादिका भूरादिशब्देभ्य एव
प्रादुर्भूतेभ्यो भूरादिलोकान्सृष्टान्दर्शयति । किमात्मकं पुनः
भिप्रेत्येदं शब्दप्रभवत्वमुच्यते । स्फोटमित्याह । वर्णपक्षे हि तेषां
प्रध्वंसित्वान्नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं
उत्पन्नध्वंसिनश्च वर्णाः, प्रत्युच्चारणमन्यथा चान्यथा च प्रतीयमा
तथाहि—अदृश्यमानोऽपि पुरुषविशेषोऽध्ययनध्वनिश्रवणादेव
निर्धार्यते देवदत्तोऽयमधीते यज्ञदत्तोऽयमधीते इति । नचायं
विषयोऽन्यथात्वप्रत्ययो मिथ्याज्ञानं, बाधकप्रत्ययाभावात् । न
भ्योऽर्थावगतिर्युक्ता । न ह्येकैको वर्णोऽर्थं प्रत्याययेत्, व्यभि
नच वर्णसमुदायप्रत्ययोऽस्ति, क्रमवत्त्वाद्वर्णानाम् । पूर्वपूर्ववर्णा
नितसंस्कारसहितोऽन्त्योवर्णोऽर्थं प्रत्याययिष्यतीति यद्युच्येत । त
न्धग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेद्धूमादिवत् ।

---

१ संप्रदायो गुरुशिष्यपरम्पराध्ययनम् । २ संस्था अवस्थाः । ३ वर्णात्मं
कस्फोटरूपं वेति किंशब्दार्थः । ४ स्फुटते वर्णैर्व्यज्यत इति स्फोटो वर्णाभिव्य
व्यञ्जको गवादिशब्दो नित्यस्तमभिप्रेत्येदमुच्यत इति पूर्वेणान्वयः । ५ व्यभि
स्याद्वर्णादर्थप्रतीत्यदर्शनात् वर्णान्तरवैयर्थ्यप्रतीत्यदर्शनादित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पूर्ववर्णानुभवजनितसंस्कारसहितस्यान्त्यवर्णस्य प्रतीतिरस्ति, अप्रत्यक्षत्वात्संस्काराणाम् । कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णोऽर्थं प्रत्याययिष्यतीति चेत् । न । संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात् । तस्मात्स्फोट एव शब्दः । स चैकैकवर्णप्रत्ययाहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते । नचायमेकप्रत्ययो वर्णविषया स्मृतिः । वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः। तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वम् । भेदप्रत्ययस्य वर्णविषयत्वात् । तस्मान्नित्याच्छब्दात्स्फोटरूपादभिधायकात्क्रियाकारकफललक्षणं जगदभिधेयभूतं प्रभवतीति । 'वर्णा एव तु शब्दः' इति भगवानुपवर्षः। ननूत्पन्नप्रध्वंसित्वं वर्णानामुक्तं, तन्न । त एवेति प्रत्यभिज्ञानात् सादृश्यात्प्रत्यभिज्ञानं केशादिष्विवेति चेत् । न । प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः । प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत् । न । व्यक्तिप्रत्यभिज्ञानात् । यदि हि प्रत्युच्चारणं गवादिव्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरंस्तत आकृतिनिमित्तं प्रत्यभिज्ञानं स्यात् । नत्वेतदस्ति । वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते । द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिर्न तु द्वौ गोशब्दाविति । ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तम् । अत्राभिधीयते—सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यङ्ग्यत्वाद्वर्णानामभिव्यञ्जकवैचित्र्यनिमित्तोऽयं वर्णविषयो विचित्रः प्रत्ययो न स्वरूपनिमित्तः । अपिच वर्णव्यक्तिभेदवादिनापि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पयितव्याः । तासु च परोपाधिको भेदप्रत्यय

---

१ एकैकेति यथा रत्नतत्त्वं बहुभिश्चाक्षुषप्रत्ययैः स्फुटं भासते तथा गवादिपदस्फोटो गकाराद्येकैकवर्णकृतप्रत्ययैः स्फोटविषयैराहिताः संस्कारा बीजं यस्मिन् चित्ते तस्मिन् अन्त्यवर्णकृतप्रत्ययेन जनितः परिपाकोऽन्त्यः संस्कारो यस्मिंस्तस्मिन्प्रत्ययिनि चित्ते एकं गौरिति पदमिति प्रत्ययः प्रत्यक्षस्तद्विषयतया स्पष्टमवभासत इत्यर्थः । वपनानन्तरं त एवेमे केशा इति धीर्भ्रान्तिरिति युक्तम्, भेदधीविरोधात् । ३ ताल्वादिदेशैः कोष्ठस्थवायुसंयोगविभागाभ्यां विचित्राभ्यां व्यञ्ञ्यत्वाद्वर्णेषु वैचित्र्यधीरित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यभ्युपगन्तव्यम् । तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदः
स्वरूपनिमित्तं च प्रत्यभिज्ञानमिति कल्पनालाघवम् । एष
वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत्प्रत्यभिज्ञानम् । कथं
स्मिन्काले बहूनामुच्चारयतामेक एव सन्गकारो युगपदनेकरूपः
उदात्तश्चानुदात्तश्च स्वरितश्च सानुनासिकश्च निरनुनासिकश्चेति ।
ध्वनिकृतोऽयं प्रत्ययभेदो न वर्णकृत इत्यदोषः । कः पुनरयं ध्वनि
यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतर
प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वासञ्जयति । तन्निबन्धना
त्तादयो विशेषा न वर्णस्वरूपनिबन्धनाः, वर्णानां प्रत्युच्चारणं
ज्ञायमानत्वात् । एवंच सति सालम्बना उदात्तादिप्रत्यया भवि
इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात्संयोगविभा
उदात्तादिविशेषाः कल्पेरन् । संयोगविभागानां चाप्रत्यक्षत्वान्न
विशेषा वर्णेष्वध्यवसितुं शक्यन्त इत्यतो निरालम्बना एवैत
दिप्रत्ययाः स्युः । अपिच नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णा
भिज्ञायमानानां भेदो भवेदिति । नह्यन्यस्य भेदेनान्यस्याभि
भेदो भवितुमर्हति । नहि व्यक्तिभेदेन जातिं भिन्नां मन्यन्ते
भ्यश्चार्थप्रतीतेः संभवात्स्फोटकल्पनानर्थिका । न कल्पयाम्यह
प्रत्यक्षमेव त्वेनमवगच्छामि, एकैकवर्णग्रहणाहितसंस्कार
झटिति प्रत्यवभासनादिति चेन्न् । न । अस्या अपि बुद्धेर्वर्णविष
एकैकवर्णग्रहणोत्तरकाला हीयमेका बुद्धिर्गौरिति समस्त
नार्थान्तरविषया । कथमेतदवगम्यते । यतोऽस्यामपि बुद्धौ ग
वर्णा अनुवर्तन्ते नतु दकारादयः । यदि ह्यस्या बुद्धेर्गकारादिभ्यो
स्फोटो विषयः स्यात्ततो दकारादय इव गकारादयोऽप्यस्या बु

१ योऽवतरति स ध्वनिरिति शेषः । वर्णातिरिक्तः शब्दो ध्वनिरित्यर्थः ।
रणं वर्णा अनुवर्तन्ते ध्वनिर्व्यावर्तत इति भेदः । ३ अप्रत्यक्षत्वं अश्रावणत्वम् ।
खण्डमुण्डादिविरुद्धानेकव्यक्तिष्वभिन्नं गोत्वं तथा ध्वनिषु वर्णा अभिन्ना
५ उदात्तादिर्ध्वनिस्तद्भेदेन हेतुना वर्णानामपीति योजना ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रन् । नतु तथास्ति । तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः । नन्वने-
कत्वाद्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तं, तत्प्रतिब्रूमः—संभवत्य-
नेकस्याप्येकबुद्धिविषयत्वं, पङ्क्तिर्वनं सेना दश शतं सहस्रमित्यादिदर्श-
नात् । या तु गौरित्येकोऽयं शब्द इति बुद्धिः, सा बहुष्वेव वर्णेष्वेका-
र्थावच्छेदनिबन्धनौपचारिकी वनसेनादिबुद्धिवदेव । अत्राह—यदि
वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं स्युस्ततो जारा
राजा कपिः पिक इत्यादिषु पदविशेषप्रतिपत्तिर्न स्यात् । त एव हि
वर्णा इतरत्र चेतरत्र च प्रत्यवभासन्त इति । अत्र वदामः—सत्यपि
समस्तवर्णप्रत्यवमर्शे यथा क्रमानुरोधिन्य एव पिपीलिकाः पङ्क्तिबुद्धि-
मारोहन्ति; एवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोक्ष्यन्ति । तत्र
वर्णानामविशेषेऽपि क्रमविशेषकृता पदविशेषप्रतिपत्तिर्न विरुध्यते ।
वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीता गृहीतार्थविशेषसंबन्धाः सन्तः
स्वव्यवहारोऽप्येकैकवर्णग्रहणानन्तरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा
एव प्रत्यवभासमानास्तं तमर्थमव्यभिचारेण प्रत्याययिष्यन्तीति वर्णवा-
दिनो लघीयसी कल्पना । स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना च ।
वर्णाश्चेमे क्रमेण गृह्यमाणाः स्फोटं व्यञ्जयन्ति स स्फोटोऽर्थं व्यनक्तीति
गरीयसी कल्पना स्यात्, अथापि नाम प्रत्युच्चारणमन्येऽन्ये वर्णाः स्युः,
तथापि प्रत्यभिज्ञालम्बनभावेन वर्णसामान्यानामवश्याभ्युपगन्तव्य-
त्वाद्या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु संचारयि-
तव्या । ततश्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यवि-
रुद्धम् ॥ २८ ॥

## अतएव च नित्यत्वम् ॥ २९ ॥

स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्ति-
प्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्य 'अतः प्रभवात्' इति परिहृ-

---

१ अर्थावच्छेदोऽर्थनिश्चयः । २ प्रत्यवमर्शः स्मृतिः । ३ व्युत्पत्तिदशा वृद्धव्यवहारः । क्रमादित्यादिशब्देन संख्या गृह्यते । स्वस्वव्यवहारो मध्यमवृद्धस्य प्रवृत्त्यवस्था । तादृशत्वं व्युत्पत्तिदशादृष्टक्रमाद्यनुगृहीतत्वम् । ५ दृष्टं वर्णानामर्थबोधकत्वं, अदृष्टः स्फोटः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्येदानीं तद्वेव वेदनित्यत्वं स्थितं द्रढयति—अतएव च नित्यत्वम्
अतएव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दे नित्यत्वं
प्रत्येतव्यम्। तथाच मन्त्रवर्णः—'यज्ञेन वाचः पदवीयमायन्तान्
न्दन्नृषिषु प्रविष्टाम्' (ऋ० सं० १०।७१।३) इति स्थितामेव
मनुविन्नां दर्शयति। वेदव्यासश्चैवमेव स्मरति—'युगान्तेऽन्तर्हि
दान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः
इति ॥ २९ ॥

**समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च**

अथापि स्यात्। यदि पश्वादिव्यक्तिवद्देवादिव्यक्तयोऽपि
त्पत्तेरन्निरुध्येरंश्च ततोऽभिधानाभिधेयाभिधातृव्यवहारविच्छेदात्
नित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं
परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुति
वदन्ति तदा कथमविरोध इति। तत्रेदमभिधीयते—समाननाम
दिति तदापि संसारस्यानादित्वं तावदभ्युपगन्तव्यम्। प्रतिपा
चाचार्यः संसारस्यानादित्वम्—'उपपद्यते चाप्युपलभ्यते च' (ब्र०
इति। अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणे
प्रबोधवदुक्तप्रबोधेऽपि व्यवहारान्न कश्चिद्विरोधः, एवं कल्प
वप्रलययोरपीति द्रष्टव्यम्। स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते
सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवन्ति
वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः
सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा

---

१ यज्ञेन पूर्वसुकृतेन कर्मणा वाचो वेदस्य पदवीं मार्गयोग्यतां
आयन्प्राप्तवन्तः, ततस्तां वाचमृषिषु प्रविष्टां विद्यमानां अन्वविन्दन्ननुलब्धवन्तः
इति यावत्। २ अनुविन्नामुपलब्धाम्। ३ पूर्वमवान्तरकल्पादौ। ४ अभिधा
पकाध्येतारायुक्तौ। ५ तदापि महाप्रलयमहासर्गाङ्गीकारेऽपीति यावत्।
क्रमादथशब्दः तदेत्यर्थः। प्राणः परमात्मा तत्र जीव एकीभवति एनं प्राणं
तदेतीति शेषः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ० ३।३ ) इति । स्यादेतत् । स्वापे पुरुषान्तरव्यवहाराविच्छेदात्स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धम् । महाप्रलये तु सर्वव्यवहारोच्छेदाज्जन्मान्तरव्यवहारवच्च कल्पान्तरव्यवहारस्यानुसंधानमशक्यत्वाद्वैषम्यमिति । नैष दोषः । सत्यपि सर्वव्यवहारोच्छेदिनि महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पान्तरव्यवहारानुसंधानोपपत्तेः । यद्यपि प्राकृताः प्राणिनो न जन्मान्तरव्यवहारमनुसंदधाना दृश्यन्त इति, तथापि न प्राकृतवदीश्वराणां भवितव्यम् । तथाहि प्राणित्वाविशेषेऽपि मनुष्यादिस्तम्बपर्यन्तेषु ज्ञानैश्वर्यादिप्रतिबन्धः परेण परेण भूयान्भवन्दृश्यते, तथा मनुष्यादिष्वेव हिरण्यगर्भपर्यन्तेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतच्छ्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न शक्यं नास्तीति वदितुम् । ततश्चातीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रादुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत्कल्पान्तरव्यवहारानुसंधानोपपत्तिः । तथाच श्रुतिः—'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे० ६।१८ ) इति । स्मरन्ति च शौनकादयः 'मधुच्छन्दःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टाः' इति । प्रतिवेदं चैवमेव काण्डर्ष्यादयः स्मर्यन्ते । श्रुतिरप्यृषिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानं दर्शयति—'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं

१ तस्मात् प्राणात्मनः, आयतनं गोलकम् । २ इतिशब्दो यद्यपीत्यनेन संबध्यते । 'हिरण्यगर्भः समवर्तते'त्यादयः श्रुतिवादाः, 'ज्ञानमप्रतिमं यस्य'त्यादयः स्मृतिवादाः । प्रहिणोति गमयति तस्य बुद्धौ वेदानाविर्भावयति । ५ ऋग्वेदो दशमण्डलात्मकः मण्डलानां दशतयमत्रास्तीति तत्र भवा ऋचो दाशतय्यः । ६ आर्षेयं ऋषियोगः, छन्दो गायत्र्यादि, दैवतमग्न्यादि, ब्राह्मणं विनियोगः एतान्यविदितानि यस्मिन्मन्त्रे, स्थाणुं स्थावरं, गर्तं नरकम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्च्छेति गर्तं वा प्रतिपद्यते' ( सर्वानु० परि० ) इत्युपक्रम्य 'तस्मा मन्त्रे मन्त्रे विद्यात्' इति । प्राणिनां च सुखप्राप्तये धर्मो वि दुःखपरिहाराय चाधर्मः प्रतिषिध्यते । दृष्टानुश्रविकसुखदुःख च रागद्वेषौ भवतो न विलक्षणविषयावित्यतो धर्मोप तोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते । स्मृतिश्च तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे । तान्येव ते सृज्यमानाः पुनः पुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । विताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥' इति । प्रलीयमानमपि जगच्छक्त्यवशेषमेव प्रलीयते । शक्तिमूलमेव च प्रभवति । इत स्मिकत्वप्रसङ्गात् । नचानेकाकाराः शक्तयः शक्याः कल्पयितुम् । विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां, देवतिर्यङ्म क्षणानां च प्राणिनिकायप्रवाहाणां, वर्णाश्रमधर्मफलव्यवस्थानां संसारे नियतत्वमिन्द्रियविषयसंबन्धनियतत्ववत्प्रत्येतव्यम् । यविषयसंबन्धादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेन्द्रियवि शक्यमुत्प्रेक्षितुम् । अतश्च सर्वकल्पानां तुल्यव्यवहारत्वात् व्यवहारानुसंधानक्षमत्वाच्चेश्वराणां समाननामरूपा एव विशेषाः प्रादुर्भवन्ति । समाननामरूपत्वाच्चावृत्तावपि महाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छ ण्यादिविरोधः समाननामरूपतां च श्रुतिस्मृती दर्शयतः चन्द्रमसौ धाता यथापूर्वमकल्पयत् । दिवं च पृथिवीं क्षमथो स्वः' ( ऋ० सं० १०।१९०।३ ) इति । यथा पूर्व सूर्याचन्द्रमःप्रभृति जगत्क्लृप्तं तथास्मिन्नपि कल्पे परमेश्वरोऽकल्प त्यर्थः । तथा 'अग्निर्वा अकामयत अन्नादो देवानाᳬ स्यामि एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्' (

१ तेषां प्राणिनां मध्ये । तान्येव तज्जातीयान्येव । २ षष्ठेन्द्रियं मनः 'मनः याणी'ति स्मृतेः । ३ नक्षत्रबहुत्वाद्बहुवचनम् कृत्तिकादेवतायाग्नये, अष्टसु नीयं हविर्निरुप्तवान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

[तै॰ ब्रा॰ ३]।१।४।१ ) इति नक्षत्रेष्टिविधौ योऽग्निर्निरवपद्यस्मै वाग्नये निरवप-[त्तय]योः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या । [स्मृ]तिरपि—'ऋषीणां नामधेयानि याश्च वेदेषु[1] दृष्टयः । शर्वर्यन्ते [प्र]सूतानां तान्येवैभ्यो ददात्यजः ॥ यथर्तुष्वृतुलिङ्गानि नानारूपाणि [प]र्यये । दृश्यन्ते तानि तान्येव तथा भावा[2] युगादिषु ॥ यथाभिमानि-[नो]ऽतीतास्तुल्यास्ते सांप्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥' [इ]त्येवंजातीयका द्रष्टव्या ॥ ३० ॥

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

इह देवादीनामपि ब्रह्मविद्यायामस्त्यधिकार इति यत्प्रतिज्ञातं तत्प-[र्या]वर्त्यते । देवादीनामनधिकारं जैमिनिराचार्यो मन्यते । कस्मात् । [म]ध्वादिष्वसंभवात् । ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशे-[षा]न्मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत । नचैवं संभवति । कथम् । ['अ]सौ वा आदित्यो देवमधु' ( छा॰ ३।१।१ ) इत्यत्र मनुष्या आदित्यं [म]ध्वध्यासेनोपासीरन् । देवादिषु ह्युपासकेष्वभ्युपगम्यमानेष्वादित्यः [क]मन्यमादित्यमुपासीत । पुनश्चादित्यव्यपाश्रयाणि पञ्च[3] रोहितादीन्य-[मृ]तान्युपक्रम्य वसवो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः [क्र]मेण तत्तदमृतमुपजीवन्तीत्युपदिश्य 'स य एतदेवममृतं वेद वसूना-[मे]वैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिना वस्वाद्यु-[प]जीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति । वस्वाद-[य]स्तु कानन्यान्वस्वादीनमृतोपजीविनो विजानीयुः । कं वान्यं वस्वादि-

---

१ देवेष्विति विषयसप्तमी । शर्वर्यन्ते प्रलयान्ते। ऋतुलिङ्गानि नवपल्लवादीनि । पर्यये [प]र्यायेणावृत्तौ । २ भावाः पदार्थाः । ३ पञ्चेति चतुर्वेदोक्तकर्माणि प्रणवश्चेति पञ्च [कु]सुमानि तेभ्यः सोमाज्यादिद्रव्याणि हुतानि रोहितादीनि लोहितं, शुक्लं कृष्णं, परं [कृ]ष्णं, मध्ये क्षोभत इव, इत्युक्तानि पञ्च रोहितादीन्यमृतानि तत्तन्मन्त्रभागैः प्रागाद्यूर्ध्वा-पञ्चदिगवस्थिताभिरादित्यरश्मिनाडीभिर्मध्वपूपस्थितच्छिद्ररूपाभिरादित्यमण्डलमानी-[ता]नि यशस्तेजइन्द्रियवीर्याद्यात्मना परिणतानि पञ्च दिक्षु स्थितैर्वस्वादिभिरुपजीव्यानीति [क]थयन्तो वस्वादिप्राप्तिरुक्तेत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महिमानं प्रेप्सेयुः । तथा अग्निः पादो वायुः पाद आदित्यः पा पादः' (छा० ३।१८।२), 'वायुर्वाव संवर्गः' (छा० ४।३।१) ब्रह्मेत्यादेशः' (छा० ३।१९।१) इत्यादिषु देवतात्मोपासनेषु देव मेव देवतात्मनामधिकारः संभवति । तथा 'इमावेव गोतमभ वयमेव गोतमोऽयं भरद्वाजः' (बृ० २।२।४) इत्यादिष्वृषि पूपासनेषु न तेषामेवर्षीणामधिकारः संभवति ॥ ३१ ॥

कुतश्च देवादीनामनधिकारः—

## ज्योतिषि भावाच्च ॥ ३२ ॥

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रम सयति तस्मिन्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते । द्धेर्वाक्यशेषप्रसिद्धेश्च । नच ज्योतिर्मण्डलस्य हृदयादिना विग्रहे नतयार्थित्वादिना वा योगोऽवगन्तुं शक्यते मृतादिवदचेतनत्वा एतेनाग्न्यादयो व्याख्याताः । स्यादेतत् । मन्त्रार्थवादेतिहासपुरा देवादीनां विग्रहवत्त्वाद्यवगमादयमदोष इति । नेत्युच्यते । ल्लोको नाम किंचित्स्वतन्त्रं प्रमाणमस्ति । प्रत्यक्षादिभ्य एव तविशेषेभ्यः प्रमाणेभ्यः प्रसिद्ध्यन्नर्थो लोकात्प्रसिध्यतीत् नचात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति । इतिहासपुराणम यत्वात्प्रमाणान्तरमूलमाकाङ्क्षति । अर्थवादा अपि विधिनैक स्तुत्यर्थाः सन्तो न पार्थगर्थ्येन देवादीनां विग्रहादिसद्भावे प्रतिपद्यन्ते । मन्त्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभि न कस्यचिदर्थस्य प्रमाणमित्याचक्षते । तस्मादभावो देवादीना रस्य ॥ ३२ ॥

---

१ 'वज्रहस्तः पुरंदरः' इत्यादयो मन्त्राः, 'सोऽरोदीत्' इत्यादयोऽर्थवादाः गान्हि वो देवा' इत्यादीतिहासपुराणानि, लोकेऽपि यमं दण्डहस्तं, लिखन्तीति विग्रहादिपञ्चकसद्भावादनधिकारदोषो नास्तीत्यर्थः । 'विग्रहो ऐश्वर्यं च प्रसन्नता । फलप्रदानमित्येतत्पञ्चकं विग्रहादिकम् ॥' इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । बादरायणस्त्वाचार्यो भावमधिकारस्य देवादीनामपि मन्यते । यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसंभवोऽधिकारस्य तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां संभवः । अर्थित्वसामर्थ्याप्रतिषेधाद्यपेक्षत्वादधिकारस्य । नच क्वचिदसंभव इत्येतावता यत्र संभवस्तत्राप्यधिकारोऽपोद्येत । मनुष्याणामपि न सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूयादिष्वधिकारः संभवति । तत्र यो न्यायः सोऽत्रापि भविष्यति । ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूचकम्—'तद्[2]यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' (बृ० १।४।१०) इति । 'ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति । 'इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणाम्' (छा० ८।७।२) इत्यादि च । स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि । यदप्युक्तं ज्योतिषि भावाच्चेति । अत्र ब्रूमः—ज्योतिरादिविषया अपि आदित्यादयो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादि[3]षु तथा व्यवहारात् । अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं, यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम् । तथाहि श्रूयते सुब्रह्मण्यार्थवादे—मेधातिथेर्मेषेति । 'मेधातिथिं ह काण्वायनमिन्द्रो मेषो भूत्वा जहार' (षड्विंश० ब्रा० १।१) इति । स्मर्यते च—'आदित्यः पुरुषो भूत्वा कुन्तीमुपजगाम ह' इति । मृदादिष्वपि चेतना अधिष्ठातारोऽभ्युपगम्यन्ते—'मृदब्रवीदापोऽब्रुवन्' इत्यादिदर्शनात् । ज्योतिरादेस्तु भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते । चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादित्युक्तम् । यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमिति । अत्र ब्रूमः—प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं,

---

१ यतः सर्वेषां सर्वत्राधिकारो न संभवति ततो न चापोद्येतेत्यन्वयः । २ तद्ब्रह्म यो देवानां मध्ये प्रत्यक्त्वेनाबुध्यत । ३ आदिग्रहणेनेतिहासपुराणधर्मशास्त्राणि गृह्यन्ते ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नान्यार्थत्वमनन्यार्थत्वं वा । तथाह्यन्यार्थमपि प्रस्थितः पथि तृणपर्णाद्यस्तीत्येव प्रतिपद्यते । अत्राह—विषम उपन्यासः । तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते । अत्र विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादेन पार्थगर्थ्येन वृत्तान्तविषया शक्याऽध्यवसातुम् । नहि महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य प्रत्यायकत्वमस्ति । यथा 'न सुरां पिबेत्' इति नञ्वति वाक्ये पदत्रयसंबन्धात्सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते । न पुनः सुरां पिबेदिति पदद्वयसंबन्धात्सुरापानविधिरपीति । अत्रोच्यते—विषम उपन्यासः । युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणम् । विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयवृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते । यथा हि 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना संबन्धः, नैवं 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्येषामर्थवादगतानां पदानाम् । नहि भवति वायुर्वा आलभेतेति क्षेपिष्ठा देवता वा आलभेतेति । वायुस्वभावसंकीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवंविशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति । तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति तत्र तदनुवादेनार्थवादः प्रवर्तते । यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन । यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यादाहोस्वित्प्रमाणान्तराविरोधाद्विद्यमानवाद इति प्रतीतिशरणैर्विद्यमानवादः प्रतिपत्तव्यो न गुणवादः । एतेन मन्त्रो व्याख्यातः । अपिच विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम् । नहि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते । नच चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते । श्रावयति च—'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' (ऐ०ब्रा० ३।८।१) इति । नच शब्दमात्रमर्थस्वरूपं संभवति, शब्दार्थयोर्भेदात् । तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां

१ विध्युद्देशो विधिवाक्यं तदेकवाक्यतया । २ वृत्तान्तो भूतार्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम् । इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम् । प्रत्यक्षादिमूलमपि संभवति । भवति ह्यस्माकमप्रत्यक्षमपि चिरंतनानां प्रत्यक्षम् । तथाच व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते । यस्तु ब्रूयादिदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति स जगद्वैचित्र्यं प्रतिषेधेत् । इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात् । ततश्च राजसूयादिचोदनोपरुन्ध्यात् । इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीत । ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात् । तस्माद्धर्मोत्कर्षवशाच्चिरंतना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते । अपिच स्मरन्ति—'स्वाध्यायादिष्टदेवतासंप्रयोगः' ( यो० सू० २।४४ ) इत्यादि । योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम् । श्रुतिश्च योगमाहात्म्यं प्रख्यापयति—'पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्' ( श्वे० २।१२ ) इति । ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम् । तस्मात्समूलमितिहासपुराणम् । लोकप्रसिद्धिरपि न सति संभवे निरालम्बनाध्यवसातुं युक्ता । तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः । ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः । क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥ ३३ ॥

## ९ अपशूद्राधिकरणम् । सू० ३४—३८

### शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

यथा मनुष्याधिकारनियममपोद्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्ये-

१ श्लिष्यते युज्यते । २ मन्त्रजपाद्देवतासांनिध्यं तत्संभाषणं चेति सूत्रार्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते । तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम् । अर्थित्वसामर्थ्ययोः संभवात् । 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' ( तै० सं० ७।१।१।६ ) इतिवत् 'शूद्रो विद्यायामनवक्लृप्तः' इति च निषेधाश्रवणात् । यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं न तद्विद्यास्वधिकारस्यापवादकं लिङ्गम् । नह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते । भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकम् । संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति 'अहह हारेत्वा शूद्र तवैव सह गोभिरस्तु' ( छा० ४।२।३ ) इति । विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते । तस्मादधिक्रियते शूद्रो विद्यास्विति । एवं प्राप्ते ब्रूमः—न शूद्रस्याधिकारः, वेदाध्ययनाभावात् । अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते । नच शूद्रस्य वेदाध्ययनमस्ति, उपनयनपूर्वकत्वाद्वेदाध्ययनस्य । उपनयनस्य च वर्णत्रयविषयत्वात् । यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति । सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति । शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् । शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात् । यच्चेदं 'शूद्रो यज्ञेऽनवक्लृप्तः' इति, तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति, न्यायस्य साधारणत्वात् । यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तल्लिङ्गं, न्यायाभावात् । न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति । नचात्र न्यायोऽस्ति । कामं चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात्, तद्विषयत्वात्, न सर्वासु विद्यासु । अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते । शक्यते चायं शूद्रशब्दोऽधिकृतविषयो योजयितुम् । कथमित्युच्यते—'कंम्वर एनमेतत्सन्तं

१ अनवक्लृप्तोऽसमर्थः । तस्मादनग्नित्वात् । २ अहेति निपातः खेदार्थः । निष्केण हत्वा गन्ता रथो हारेत्वा सच गोभिः सह हे शूद्र, तवैवास्तु किमल्पेन गार्हस्थ्यानुपयोगिनेति भावः । ३ यज्ञेत्युपलक्षणं विद्यायामनवक्लृप्त इत्यस्य । ४ 'निषादस्थपतिं याजयेत्' इति निषादस्थपतिश्चोद्यते, न शूद्रः संवर्गविद्यायाम् । ५ कं उ पदच्छेदः । उ शब्दोऽप्यर्थः । युग्वा गन्त्री शकटी तया सह स्थितं रैक्वमिवैवम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तरसन्तं सयुग्वानमिव रैकमात्थ' (छा० ४।१।३) इत्यस्माद्धंसवा-
स्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे, तामृषी
कः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते ।
जातिशूद्रस्यानधिकारात् । कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति ।
उच्यते—तदाद्रवणात् । शुचमभिदुद्राव, शुचा वाभिदुद्रुवे, शुचा वा
कमभिदुद्रावेति शूद्रः । अवयवार्थसंभवाद्रूढ्यर्थस्य चासंभवात् । दृश्यते
चायमर्थोऽस्यामाख्यायिकायाम् ॥ ३४ ॥

क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

इतश्च न जातिशूद्रो जानश्रुतिः । यत्कारणं प्रकरणनिरूपणेन क्षत्रि-
यत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गा-
द्गम्यते । उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः
संकीर्त्यते—'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं
परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' (छा० ४।३।५) इति । चैत्र-
रथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम् । कापेययोगो हि
चैत्ररथस्यावगतः 'एतेन वै चित्ररथं कापेया अयाजयन्' (ताण्ड्य-
ब्रा० २०।१२।५) इति । समानान्वयानां च प्रायेण समानान्वया
याजका भवन्ति । 'तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति च
क्षत्रपतित्वावगमात्क्षत्रियत्वमस्यावगन्तव्यम् । तेन क्षत्रियेणाभिप्रतारिणा
सह समानायां विद्यायां संकीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति ।
समानानामेव हि प्रायेण समभिव्याहारा भवन्ति । क्षत्तृप्रेषणाद्यैश्वर्ययो-
गाच्च जानश्रुतेः क्षत्रियत्वावगतिः । अतो न शूद्रस्याधिकारः ॥ ३५ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

इतश्च न शूद्रस्याधिकारः, यद्विद्याप्रदेशेषूपनयनादयः संस्काराः
परामृश्यन्ते—'तं होपनिन्ये' (श० ब्रा० ११।५।३।१३)। 'अधीहि

१ संवर्गविद्याविध्यनन्तरमर्थवादारम्भार्थोऽथशब्दः । हशब्दो वृत्तान्तावद्योती ।
शौनकपुत्रं कपिगोत्रं पुरोहितमभिप्रतारिनामकम् । २ क्षत्ता सूतस्तस्य रैक्वान्वेषणाय
प्रेषणम् । ३ अधीहि उपदिशेति यावत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगव इति होपससाद' (छा० ७।१।१) 'ब्रह्मपरा ब्रह्मनिष्ठाः म
ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो ध
पिप्पलादमुपसन्नाः' (प्र० १।१) इति च । 'तान्हानुपनीयैव' (छा
५।११।७) इत्यपि प्रदर्शितैवोपनयनप्राप्तिर्भवति । शूद्रस्य संस्कारा
वोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः' (मनु० १०।४) इत्येका
तित्वस्मरणात् । 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' (
१०।१२।६) इत्यादिभिश्च ॥ ३६ ॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

इतश्च न शूद्रस्याधिकारः । यत्सत्यवचनेन शूद्रत्वाभावे निर्धा
जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते 'नैतदब्राह्मणो विवक्तुमर्ह
समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः' (छा० ४।४।
श्रुतिलिङ्गात् ॥ ३७ ॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

इतश्च न शूद्रस्याधिकारः । यदस्य स्मृतेः श्रवणाध्ययनार्थप्रति
भवति । वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानु
प्रतिषेधः शूद्रस्य स्मर्यते । श्रवणप्रतिषेधस्तावत् 'अथास्य वेदमुपशृ
पुजतुभ्यां श्रोत्रप्रतिपूरणम्' इति । 'पद्यु ह वा एतच्छ्मशानं
स्माच्छूद्रसमीपे नाध्येतव्यम्' इति च । अतएवाध्ययनप्रतिषेधः
हि समीपेऽपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत ।
वेदोच्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति । अतएव चार्थ
नुष्ठानयोः प्रतिषेधो भवति 'न शूद्राय मतिं दद्यात्' इति,

---

१ ब्रह्मपरा वेदपारगाः । परं निर्गुणं ब्रह्म । उपसन्ना उपागताः । २
हीनवर्णेनोत्तमवर्णा अनुपनीयैवोपदेष्टव्या इत्याचारज्ञापनार्थमित्यर्थः। ३ एकजाति
४ नाहं गोत्रं वेद्मि न माता वेत्ति परंतु तयोक्तं 'उपनयनार्थमाचार्यं गत्वा
जाबालोऽस्मीति ब्रूहि' त्यनेन सत्यवचनेन। ५ त्रपुजतुभ्यां संतापद्रुताभ्यां श्रोत्र
६ पद्यु पादयुक्तम् । संचारसमर्थमिति यावत् । ७ मतिर्वेदार्थज्ञानम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मध्ययनमिज्या दानम्' इति च । येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं, ज्ञानस्यैकान्तिकफलत्वात् । 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् । वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् ॥ ३८ ॥

## १० कम्पनाधिकरणम् । सू० ३९

### कम्पनात् ॥ ३९ ॥

अवसितः प्रासङ्गिकोऽधिकारविचारः । प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः । 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' ( का० २।६।२ ) इति । एतद्वाक्यं 'एजृ कम्पने' इति धात्वर्थानुगमाल्लक्षितम् । अस्मिन्वाक्ये सर्वमिदं जगत्प्राणाश्रयं स्पन्दते, महच्च किंचिद्भयकारणं वज्रशब्दितमुद्यतं, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते । तत्र कोऽसौ प्राणः, किं तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत्प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति । प्रसिद्धेरेव चाशनिर्वज्रं स्यात् । वायोश्चेदं माहात्म्यं संकीर्त्यते । कथम् । सर्वमिदं जगत्पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायैजति । वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते । वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते । वायुविज्ञानादेव चेदममृतत्वम् । तथाहि श्रुत्यन्तरम्—'वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद' इति । तस्माद्वायुरयमिह प्रतिपत्तव्य इति । एवं प्राप्ते ब्रूमः—ब्रह्मैवेदमिह प्रतिपत्तव्यम् । कुतः । पूर्वोत्तरालोचनात् । पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे । इहैव कथमकस्मादन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि । पूर्वत्र तावत् 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन' ( का० २।६।१ ) इति ब्रह्म निर्दिष्टं, तदेवेहापि संनिधानात् जगत्सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ष्टमिति गम्यते । प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः, 'प्राणस्य
प्राणम्' (बृ० ४।४।१८) इति दर्शनात् । एजयितृत्वमपीदं परमा-
त्मन एवोपपद्यते न वायुमात्रस्य । तथाचोक्तम्—'न प्राणेन
नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपा-
श्रितौ' (का० २।५।५) इति । उत्तरत्रापि 'भयादस्याग्निस्तपति
भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' (का०
२।६।३) इति ब्रह्मैव निर्देक्ष्यते न वायुः । सवायुकस्य जगतो निय-
न्तृत्वाभिधानात् । तदेवेहापि संनिधानान्महद्भयं, वज्रमुद्यतमिति
भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते । वज्रशब्दोऽप्ययं भय-
हेतुत्वसामान्यात्प्रयुक्तः । यथाहि वज्रमुद्यतं ममैव शिरसि निपतेद्यदि
अस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमेन राजादि-
प्रवर्तत एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नि-
स्वव्यापारे प्रवर्तत इति भयानकं वज्रोपमितं ब्रह्म । तथाच ब्रह्मवि-
श्रुत्यन्तरम्—'भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषा-
श्चेन्द्रश्च । मृत्युर्धावति पञ्चमः' (तै० ८।१) इति । अमृतत्व-
श्रवणादपि ब्रह्मैवेदमिति गम्यते । ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः 'त-
विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे०
इति मन्त्रवर्णात् । यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितं
कम् । तत्रैव प्रकरणान्तरकरणेन परमात्मानमभिधाय 'अतोऽन्यदा-
र्तम्' (बृ० ३।४) इति वाय्वादेरार्तत्वाभिधानात् । प्रकरणा-
परमात्मनिश्चयः । 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (का० १।२।१४)
परमात्मनः पृष्टत्वात् ॥ ३९ ॥

---

१ भीषा भीत्या । अस्माद्ब्रह्मणो निमित्तादिति यावत् । पञ्चानां ग्रहणं
स्यान्तराचराचरोपलक्षणार्थम् । २ 'अपपुनर्मृत्युं जयति' इति श्रुत्या
उक्तो न तु परममृत्युविजय इत्यापेक्षिकत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ११ ज्योतिरधिकरणम् । सू० ४०

### ज्योतिर्दर्शनात् ॥ ४० ॥

'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा० ८।१२।३ ) इति श्रूयते । तत्र संशय्यते, किं ज्योतिःशब्दं चक्षुर्विषयतमोपहं तेजः किंवा परं ब्रह्मेति । किं तावत्प्राप्तम् । प्रसिद्धमेव तेजो ज्योतिःशब्दमिति । कुतः । तत्र ज्योतिःशब्दस्य रूढत्वात् । 'ज्योतिश्चरणाभिधानात्' ( ब्र० सू० १।१।२४ ) इत्यत्र हि प्रकरणाज्ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते । नचेह तद्वत्किंचित्स्वार्थपरित्यागे कारणं दृश्यते । तथाच नाडीखण्डे—'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' ( छा० ८।६।५ ) इति मुमुक्षोरादित्यप्राप्तिरभिहिता । तस्मात्प्रसिद्धमेव तेजो ज्योतिःशब्दमिति । एवं प्राप्ते ब्रूमः—परमेव ब्रह्म ज्योतिःशब्दम् । कस्मात् । दर्शनात् । तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते, 'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात् । 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३ ) इति चानुसंधानात् । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ( छा० ८।१२।१ ) इति चाशरीरतायै ज्योतिःसंपत्तेरस्याभिधानात् । ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः 'परं ज्योतिः' 'स उत्तमः पुरुषः' ( छा० ८।१२।३ ) इति च विशेषणात् । यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति । नासावात्यन्तिको मोक्षो गत्युत्क्रान्तिसंबन्धात् । नह्यात्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ ४० ॥

---

१ 'अथ या एता हृदयस्य नाड्यः' इत्यादि नाडीखण्डः । तत्रादित्यब्रह्मानुरोधेन मुमुक्षोस्तत्प्राप्तिरभिहितेति संबन्धः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## १२ अर्थान्तरत्वव्यपदेशाधिकरणम् । सू० ४१

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म स आत्मा' ( छा० ८।१४।१ ) इति श्रूयते । तत्किमाकाश ब्रह्म किंवा प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो आकाशशब्दस्य तस्मिन्रूढत्वात्, नामरूपनिर्वहणस्य चावकाश रेण तस्मिन्योजयितुं शक्यत्वात्, स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्ग वणादिति । एवं प्राप्त इदमुच्यते—परमेव ब्रह्मेहाकाशशब्दं मर्हति । कस्मात् । अर्थान्तरत्वादिव्यपदेशात् । 'ते यदन्तरा' इति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति । न ह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं संभवति' सर्वस्य विकारजातस्य रूपाभ्यामेव व्याकृतत्वात् । नामरूपयोरपि निर्वहणं निरङ्कु ब्रह्मणोऽन्यत्र संभवति । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे करवाणि' ( छा० ६।३।२ ) इत्यादिब्रह्मकर्तृकत्वश्रवणात् । ननु वस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति । बाढमस्ति । दस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वा लिङ्गमभिहितं भवति । 'तद्ब्रह्म तदमृतं स आत्मा' ( छा० इति च ब्रह्मवादस्य लिङ्गानि । 'आकाशस्तल्लिङ्गात्' ( ब्र० १ इत्यस्यैवायं प्रपञ्चः ॥ ४१ ॥

## १३ सुषुप्त्युत्क्रान्त्यधिकरणम् । सू० ४२–४३

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

व्यपदेशादित्यनुवर्तते । बृहदारण्यके षष्ठे प्रपाठके 'कतम योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' ( बृ० ४।३।७ पक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः । तत्किं संसारिस्वरूप

---

१ नामरूपे शब्दार्थौ तदन्तःपातिनस्तद्भिन्नत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः । बुद्धिस्तन्मयस्तत्प्रायः । प्राणेष्विति सप्तमी व्यतिरेकार्था । प्राणबुद्धिभ्यां भि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ख्यानपरं वाक्यमुतासंसारिस्वरूपप्रतिपादनपरमिति संशयः। किं तावत्प्राप्तम्। संसारिस्वरूपमात्रविषयमेवेति। कुतः। उपक्रमोपसंहाराभ्याम्। उपक्रमे 'योऽयं विज्ञानमयः प्राणेषु' इति शारीरलिङ्गात्। उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' ( बृ० ४।४।२२ ) इति तदपरित्यागात्, मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति। एवं प्राप्ते ब्रूमः—परमेश्वरोपदेशपरमेवेदं वाक्यं न शारीरमात्रान्वाख्यानपरम्। कस्मात्। सुषुप्त्युत्क्रान्त्योः च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात्। सुषुप्तौ तावत् 'अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्' ( बृ० ४।३।२१ ) इति शारीराद्भेदेन परमेश्वरं व्यपदिशति। तत्र पुरुषः शारीरः स्यात्तस्य वेदितृत्वात्। बाह्याभ्यन्तरवेदनप्रसङ्गे सति तत्प्रतिषेधसंभवात्। प्राज्ञः परमेश्वरः, सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवियोगात्। तथोत्क्रान्तावपि 'अयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन्याति' ( बृ० ४।३।३५ ) इति जीवाद्भेदेन परमेश्वरं व्यपदिशति। तत्रापि शारीरो जीवः स्याच्छरीरस्वामित्वात्। प्राज्ञस्तु स एव परमेश्वरः। तस्मात्सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्परमेश्वर एवात्र विवक्षित इति गम्यते। यदुक्तमाद्यन्तमध्येषु शारीरलिङ्गात्तत्परत्वमस्य वाक्यस्येति। अत्र ब्रूमः—उपक्रमे तावत् 'योऽयं विज्ञानमयः प्राणेषु' इति न संसारिस्वरूपं विवक्षितं किं तर्ह्यनूद्य संसारिस्वरूपं परेण ब्रह्मणास्यैकतां विवक्षति। यतो 'ध्यायतीव लेलायतीव' इत्येवमाद्युत्तरग्रन्थप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते। तथोपसंहारेऽपि यथोपक्रममेवोपसंहरति—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' इति। योऽयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते स वा एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः। यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात्संसारिस्वरूपविवक्षां मन्यते, स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि

१ बुद्धान्तो जाग्रदवस्था। २ अन्वारूढोऽधिष्ठितः। उत्सर्जन्घोराञ्शब्दान्मुञ्चन्। ३ बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव, चलन्त्यां चलतीव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिशं प्रतिष्ठेत । यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्थावत्त्वं तद्
वा विवक्षति, किं तर्ह्यवस्थारहितत्वमसंसारित्वं च । कथमेतदव
यत् 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' इति पदे पदे पृच्छति । य
न्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः (बृ० ४।३।१४,१५) इति
प्रतिवक्ति । 'अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा
ञ्छोकान्हृदयस्य भवति' ( बृ० ४३।२२ ) इति च। तस्मादसंसा
प्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ ४३ ॥

इतश्चासंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगन्तव्यम् ।
न्वाक्ये पत्यादयः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसा
प्रतिषेधनाश्च भवन्ति । 'सर्वस्य वशी[3] सर्वस्येशानः सर्वस्य
इत्येवंजातीयका असंसारिस्वभावप्रतिपादनपराः । 'स न साधु
भूयान्नो एवासाधुना कनीयान्' इत्येवंजातीयकाः संसारिस्व
धनाः । तस्मादसंसारी परमेश्वर इहोक्त इत्यवगम्यते ॥ ४३ ॥
श्रीमच्छंकरभगवत्पादकृतौ शारीरकमीमांसाभाष्ये प्रथमाध्याय
पादः ॥ ३ ॥

# प्रथमाध्याये चतुर्थः पादः ।

[ अत्र प्रधानविषयत्वेन संदिह्यमानानामव्यक्ताजादिपदानां चिन्तनं

## १ आनुमानिकाधिकरणम् । सू० १—७

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्य तेर्दर्शयति च ॥ १ ॥

ब्रह्मजिज्ञासां प्रतिज्ञाय ब्रह्मणो लक्षणमुक्तम्—'जन्माद्यस्य
( ब्र० १।१।२ ) इति । तल्लक्षणं प्रधानस्यापि समान

१ भवतीति यस्मात्प्रतिवक्ति तस्मादवगम्यत इति योजना । तेनावस्था
तोऽस्पृष्टो भवति असत्त्वात् । २ अत ऊर्ध्वं कामादिविवेकानन्तरम् । ३ वशी
ईशानो नियमनशक्तिमान् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदशब्दत्वेन निराकृतम्—'ईक्षतेर्नाशब्दम्' (ब्र० १।१।५) इति । तद्गतिसामान्यं च वेदान्तवाक्यानां ब्रह्मकारणवादं प्रति विद्यते न प्रधानकारणवादं प्रतीति प्रपञ्चितं गतेन ग्रन्थेन । इदं त्विदानीमवशिष्टमाशङ्क्यते—यदुक्तं प्रधानस्याशब्दत्वं तदसिद्धं, कासुचिच्छाखासु प्रधानसमर्पणाभासानां[3] शब्दानां श्रूयमाणत्वात् । अतः प्रधानस्य कारणत्वं वेदसिद्धमेव महद्भिः परमर्षिभिः कपिलप्रभृतिभिः परिगृहीतमिति प्रसज्यते । तद्यावत्तेषां शब्दानामन्यपरत्वं न प्रतिपाद्यते तावत्सर्वज्ञं ब्रह्म जगतः कारणमिति प्रतिपादितमप्याकुलीभवेत् । अतस्तेषामन्यपरत्वं दर्शयितुं परः संदर्भः प्रवर्तते । आनुमानिकमप्यनुमाननिरूपितमपि प्रधानमेकेषां शाखिनां शब्दवदुपलभ्यते । काठके हि पठ्यते—'महतः परमव्यक्तमव्यक्तात्पुरुषः परः' (१।३।११) इति । तत्र य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धास्त एवेह प्रत्यभिज्ञायन्ते । तत्राव्यक्तमिति स्मृतिप्रसिद्धेः, शब्दादिहीनत्वाच्च न व्यक्तमव्यक्तमिति व्युत्पत्तिसंभवात्, स्मृतिप्रसिद्धं प्रधानमभिधीयते । अतस्तस्य शब्दवत्त्वादशब्दत्वमनुपपन्नम् । तदेव च जगतः कारणं श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेत् । नैतदेवम् । नह्येतत्काठकं वाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरम् । नह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतन्त्रं कारणं त्रिगुणं प्रधानं तादृशं प्रत्यभिज्ञायते । शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते । स च शब्दो न व्यक्तमव्यक्तमिति यौगिकत्वादन्यस्मिन्नपि सूक्ष्मे सुदुर्लक्ष्ये च प्रयुज्यते । नचायं कस्मिंश्चिद्रूढः । या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते । नच क्रममात्रसामान्यात्समानार्थ-

---

१ प्रधानस्य वैदिकशब्दशून्यत्वेन । २ अवशिष्टमनाशङ्कितमनिराकृतं च । ३ प्रतीत्या प्रधानार्पकत्वेऽपि वस्तुतो नेति वक्तुमाभासपदम् । ४ अपिशब्दादेकशब्दाच्च ... ङ्गीकारेण पूर्वपक्षो विचारश्चायं क्वाचित्क इति सूचितम् । ५ स्मार्तक्रमरूढिभ्यामव्यक्तशब्दः प्रधानपरः । ६ 'अजामेकां' इत्याद्या श्रुतिः । 'हेतुः प्रकृतिरुच्यत' इत्याद्या स्मृतिः । ... मदल्पं तज्जडप्रकृतिकं' इति न्यायः । ततो प्रधानमेव जगत्कारणमिति मतक्षतिरिति भावः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिपत्तिर्भवत्यसति तद्रूपप्रत्यभिज्ञाने । नह्यश्वस्थाने गां पश्यन्न
त्यमूढोऽध्यवस्यति । प्रकरणनिरूपणायां चात्र न परपरिकल्पि
प्रतीयते । शरीररूपकविन्यस्तगृहीतेः । शरीरं ह्यत्र रथरूप
मव्यक्तशब्देन परिगृह्यते । कुतः । प्रकरणात्परिशेषाच्च । तथा
तीतो ग्रन्थ आत्मशरीरादीनां रथिरथादिरूपकक्लृप्तिं दर्शयति
त्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं वि
प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आ
यमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥' ( का० १।३।३,४)
तैश्चेन्द्रियादिभिरसंयतैः संसारमधिगच्छति । संयतैस्त्वध्व
तद्विष्णोः परमं पदमाप्नोतीति दर्शयित्वा, किं तदध्वनः पारं
परमं पदमित्यस्यामाकाङ्क्षायां, तेभ्य एव प्रकृतेभ्य इन्द्रि
परत्वेन परमात्मानमध्वनः पारं विष्णोः परमं पदं दर्शयति
येभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धि
महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषात्
चित्सा काष्ठा सा परा गतिः ॥' (का० १।३।१०,११) इति ।
एवेन्द्रियादयः पूर्वस्यां रथरूपककल्पनायामश्वादिभावेन प्रकृ
परिगृह्यन्ते प्रकृतहानाप्रकृतप्रक्रियापरिहाराय । तत्रेन्द्रियमनो
वत्पूर्वत्रेह च समानशब्दा एव । अर्था ये शब्दादयो विषया
हयगोचरत्वेन निर्दिष्टास्तेषां चेन्द्रियेभ्यः परत्वम् । 'इन्द्रिया
विषयाणामतिग्रहत्वम्' (बृ० ३।२) इति श्रुतिप्रसिद्धेः । वि
मनसः परत्वं, मनोमूलत्वाद्विषयेन्द्रियव्यवहारस्य । मनस
बुद्धिः । बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति । 'बुद्धेरात्
न्परः', यः स 'आत्मानं रथिनं विद्धि' इति रथित्वेनोपक्षिप्तः ।

---

१ रूपकक्लृप्तिः सादृश्यकल्पना । २ प्रग्रहोऽश्वरशना । ३ तेषु हयेषु
मार्गान् । आत्मा देहः । ५ गृह्णन्ति पुरुषपशुं बध्नन्तीति ग्रहा इन्द्रियाणि
श्रेष्ठा अतिग्रहा विषयाः । ६ परत्वं श्रेष्ठ्याभिप्रायं नत्वान्तरत्वेनेति भावः ।
प्रत्यभिज्ञायत इति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मशब्दात् । भोक्तुश्च भोगोपकरणात्परत्वोपपत्तेः । महत्त्वं चास्य स्वामित्वादुपपन्नम् । अथवा 'मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः । प्रज्ञा संविच्चितिश्चैव स्मृतिश्च परिपठ्यते ॥' इति स्मृतेः, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' ( श्वे० ६।१८ ) इति च श्रुतेर्या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परा प्रतिष्ठा । सेह महानात्मेत्युच्यते । सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुंगिहोपदिश्यते । तस्या अप्यस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः । एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यम् । परमार्थतः परमात्मविज्ञानात्मनोर्भेदाभावात् । तदेवं शरीरमेवैकं परिशिष्यते । इतराणीन्द्रियादीनि प्रकृतान्येव परमपदिदर्शयिषया समनुक्रामन्परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते । शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः शरीरादीनां रथादिरूपककल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिरिह विवक्षिता । तथाच 'एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥' ( का० १।३।१२ ) इति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति—'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि । ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥' ( का० १।३।१३ ) इति । एतदुक्तं भवति—वाचं मनसि संयच्छेत् वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत । मनोऽपि विषयविकल्पाभिमुखं विकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धावध्यवसायस्वभावायां धारयेत् । तामपि बुद्धिं महत्यात्मनि भोक्तर्यग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत् । महान्तं त्वात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे परस्यां काष्ठायां

---

१ हिरुक् पृथक् । २ वेदना सुखाद्यनुभवः । ३ वागित्यत्र द्वितीयालोपश्छान्दसः मनसी इति दीर्घश्च । ४ अग्र्या बुद्धिः समाधिपरिपाकजा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रतिष्ठापयेदिति च । तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरि
प्रधानस्यावकाशः ॥ १ ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥

उक्तमेतत्प्रकरणपरिशेषाभ्यां शरीरमव्यक्तशब्दं न प्रधानमिति
मिदानीमाशङ्क्यते—कथमव्यक्तशब्दार्हत्वं शरीरस्य, यावता
स्स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हमस्पष्टवचनस्त्वव्यक्तशब्द इ
उत्तरमुच्यते—सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते सूक्ष्म
क्तशब्दार्हत्वात् । यद्यपि स्थूलमिदं शरीरं न स्वयमव्यक्तश
तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति । प्रकृ
विकारे दृष्टः । यथा 'गोभिः श्रीणीत मत्सरम्' (ऋ० सं० ९
इति । श्रुतिश्च—'तद्धेदं तर्ह्यव्याकृतमासीत्' ( बृ० १।४।७ )
व्याकृतनामरूपविभिन्नं जगत्प्रागवस्थायां परित्यक्तव्याकृतनाम
शक्त्यवस्थमव्यक्तशब्दयोग्यं दर्शयति ॥ २ ॥

## तदधीनत्वादर्थवत् ॥ ३ ॥

अत्राह—यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं
मव्यक्तशब्दार्हमभ्युपगम्येत, तदात्मना च शरीरस्याप्यव्यक्त
प्रतिज्ञायेत, स एव तर्हि प्रधानकारणवाद एवं सत्यापद्येत ।
जगतः प्रागवस्थायाः प्रधानत्वेनाभ्युपगमादिति । अत्रोच्यते—
स्वतन्त्रां, कांचित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम,
तदा प्रधानकारणवादम् । परमेश्वराधीना त्वियमस्माभिः
जगतोऽभ्युपगम्यते न स्वतन्त्रा । सा चावश्याभ्युपगन्तव्या ।
हि सा । नहि तया विना परमेश्वरस्य स्रष्टृत्वं सिद्ध्यति । श
तस्य प्रवृत्त्यनुपपत्तेः । मुक्तानां च पुनरनुत्पत्तिः । कुतः । विद्य

---

१ प्रकृतेर्विकाराणामनन्यत्वात्प्रकृतेरव्यक्तत्वं विकारे उपचर्यते । २
कारैः पयोभिः मत्सरं सोमं श्रीणीत मिश्रितं कुर्यात् । ३ तत् ह किल तर्हि
यामिदं जगदव्याकृतं अव्यक्तमासीत् । ४ तर्हि तदा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

वीजशक्तेर्दाहात् । अविद्यात्मिका हि वीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुप्तिः, यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः । तदेतदव्यक्तं क्वचिदाकाशशब्दनिर्दिष्टम्—'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ० ३।८।११) इति श्रुतेः । क्वचिदक्षरशब्दोदितम्—'अक्षरात्परतः परः' ( मु० २।१।२ ) इति श्रुतेः । क्वचिन्मायेति सूचितम्—'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' (श्वे० ४।१० ) इति मन्त्रवर्णात् । अव्यक्ता हि सा माया, तत्त्वान्यत्वनिरूपणस्याशक्यत्वात् । तदिदं 'महतः परमव्यक्तम्' इत्युक्तमव्यक्तप्रभवत्वान्महतः, यदा हैरण्यगर्भी बुद्धिर्महान् । यदा तु जीवो महांस्तदाप्यव्यक्ताधीनत्वाज्जीवभावस्य महतः परमव्यक्तमित्युक्तम् । अविद्या ह्यव्यक्तम् । अविद्यावत्त्वेनैव जीवस्य सर्वः संव्यवहारः संततो वर्तते । महतः परत्वमभेदोपचारात्तद्विकारे शरीरे परिकल्प्यते । सत्यपि शरीरवदिन्द्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैवाभेदोपचारादव्यक्तशब्देन ग्रहणं, इन्द्रियादीनां स्वशब्दैरेव गृहीतत्वात्परिशिष्टत्वाच्च शरीरस्य । अन्ये तु वर्णयन्ति—द्विविधं हि शरीरं स्थूलं सूक्ष्मं च । स्थूलं यदिदमुपलभ्यते । सूक्ष्मं यदुत्तरत्र वक्ष्यते—'तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्' (ब्र० ३।१।१) इति । तच्चोभयमपि शरीरमविशेषात्पूर्वत्र रथत्वेन संकीर्तितम् । इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते । सूक्ष्मस्याव्यक्तशब्दार्हत्वात् । तदधीनत्वाच्च बन्धमोक्षव्यवहारस्य जीवात्तस्य परत्वम् । यथार्थाधीनत्वादिन्द्रियव्यापारस्येन्द्रियेभ्यः परत्वमर्थानामिति । तैस्त्वेतद्वक्तव्यं, अविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन संकीर्तितत्वात्समानयोः प्रकृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव शरीरमिह

---

१ मायामयी प्रसिद्धमायोपमिता । २ बुद्ध्याद्युपाधिभेदाज्जीवा इति बहूक्तिः । ३ अनवच्छिन्नत्वादाकाशत्वं, तत्त्वज्ञानं विनाऽनिवृत्तेरक्षरत्वं, विचित्रकार्यत्वान्मायात्वमिति भेदः । ४ तत् अव्यक्तम् । ५ गोबलीवर्दपदवदेतद्द्रष्टव्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गृह्यते न पुनः स्थूलमपीति । आम्नातस्यार्थं प्रतिपत्तुं प्रभवामो
पर्यनुयोक्तुम् । आम्नातं चाव्यक्तपदं सूक्ष्ममेव प्रतिपादयितुं
नेतरव्यक्तत्वात्तस्येति चेत् । न । एकवाक्यताधीनत्वादर्थप्रतिपत्तेः ।
नहीमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कंचिदर्थं प्रति
प्रकृतहानाप्रकृतप्रक्रियाप्रसङ्गात् । नचाकाङ्क्षामन्तरेणैकवाक्यताप्रति
रस्ति । तत्राविशिष्टायां शरीरद्वयस्य ग्राह्यत्वाकाङ्क्षायां यथाकाङ्क्ष
ऽनभ्युपगम्यमान एकवाक्यतैव बाधिता भवति कुत आम्नात
पत्तिः । नचैवं मन्तव्यं दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्येह ग्रहणं,
तु दृष्टबीभत्सतया सुशोधत्वादग्रहणमिति । यतो नैवेह शोधनं
चिद्विवक्ष्यते । नह्यत्र शोधनविधायि किंचिदाख्यातमस्ति ।
निर्दिष्टत्वात्तु किं तद्विष्णोः परमं पदमितीदमिह विवक्ष्यते ।
मस्मात्परमिदमस्मात्परमित्युक्त्वा 'पुरुषान्न परं किंचित्'
सर्वथापि त्वानुमानिकनिराकरणोपपत्तेस्तथा नामास्तु, न नः
च्छिद्यते ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ ४ ॥

ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते गुणपुरुषान्तरज्ञानात्कै
वद्भिः । नहि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुषस्यान्तरं श
मिति । कचिच्च विभूतिविशेषप्राप्तये प्रधानं ज्ञेयमिति स्मरन्ति
दमिहाव्यक्तं ज्ञेयत्वेनोच्यते । पदमात्रं ह्यव्यक्तशब्दः । नेहाव्य
व्यमुपासितव्यं चेति वाक्यमस्ति । नचानुपदिष्टपदार्थज्ञानं पुरु
शक्यं प्रतिपत्तुम् । तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते ।
तु रथरूपकक्लृप्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयि
पन्यास इत्यनवद्यम् ॥ ४ ॥

---

१ एकार्थबोधकानां शब्दानां मिथ आकाङ्क्षयैकस्यां बुद्धावारूढत्वमेक
२ ग्राह्यत्वाकाङ्क्षाप्येकवाक्यता । ३ दृष्टा बीभत्सा घृणा यस्मिन् तस्य भाव
त्यर्थः । ४ सर्वथा स्थूलसूक्ष्मयोरन्यतरग्रहेऽपीति यावत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥

अत्राह सांख्यः—'ज्ञेयत्वावचनात्' इत्यसिद्धम् । कथम् । श्रूयते ह्युत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनम्—'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥' ( का० २।३।१५ ) इति । अत्र हि यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितं तादृशमेव निचाय्यत्वेन निर्दिष्टं, तस्मात्प्रधानमेवेदं, तदेव चाव्यक्तशब्दनिर्दिष्टमिति । अत्र ब्रूमः—नेह प्रधानं निचाय्यत्वेन निर्दिष्टम् । प्राज्ञो हीह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते । कुतः । प्रकरणात् । प्राज्ञस्य हि प्रकरणं विततं वर्तते । 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्यादिनिर्देशात्, 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते' इति च दुर्ज्ञानत्ववचनेन तस्यैव ज्ञेयत्वाकाङ्क्षणात् । 'यच्छेद्वाङ्मनसी प्राज्ञः' इति च तज्ज्ञानायैव वागादिसंयमस्य विहितत्वात् । मृत्युमुखप्रमोक्षणफलत्वाच्च । नहि प्रधानमात्रं निचाय्य मृत्युमुखात्प्रमुच्यत इति सांख्यैरिष्यते । चेतनात्मविज्ञानाद्धि मृत्युमुखात्प्रमुच्यते इति तेषामभ्युपगमः । सर्वेषु वेदान्तेषु प्राज्ञस्यैवात्मनोऽशब्दादिधर्मत्वमभिलप्यते । तस्मान्न प्रधानस्यात्र ज्ञेयत्वमव्यक्तशब्दनिर्दिष्टत्वं वा ॥ ५ ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥

इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा । यस्मात्त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन्ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते । तद्विषय एव च प्रश्नः । नातोऽन्यस्य प्रश्न उपन्यासो वास्ति । तत्र तावत् 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि श्रद्दधानाय मह्यम्' ( का० १।१।१३ ) इत्यग्निविषयः प्रश्नः । 'येयं

१ अशब्दमित्यादिषु प्रत्येकं नित्यशब्दः संबध्यते । २ मृत्युना नचिकेतसंप्रति त्रीन्वरान्वृणीष्वेत्युक्ते त्रयाणामेव प्रश्नो नचिकेतसा कृतः । उपन्यासश्च मृत्युना कृतः । ३ हे मृत्यो, स मह्यं दत्तवरस्त्वं स्वर्गहेतुमग्निमध्येषि स्मरसि ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रेते[1] विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्वि[द्या]मनुशि-
ष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥' (का० १।१।२०) इति धर्म-
पयः प्रश्नः। 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्य-
भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ॥' (का० १।२।१४) इति पूर्वो-
त्मविषयः। प्रतिवचनमपि 'लोकादिमग्निं तमुवाच तस्मै या वि-
यावतीर्वा यथा वा' (का० १।१।१५) इत्यग्निविषयम्। 'हन्त मह-
प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्य आत्मा च
गौतम। योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसं-
यथाकर्म यथाश्रुतम्[2]' (का० २।५।६,७) इति। व्यवहितं जीवविषय-
'न जायते म्रियते वा विपश्चित्' (का० १।२।१८) इत्यादि भेद-
परमात्मविषयम्। नैवं प्रधानविषयः प्रश्नोऽस्ति। अपृष्टत्वाच्चानुपन्यसी-
नीयत्वं तस्येति। अत्राह—योऽयमात्मविषयः प्रश्नो येयं प्रेते वि[चिकित्सा]
मनुष्येऽस्तीति, किं स एवायम् 'अन्यत्र धर्मादन्यत्राधर्मात्' इति पु-
नुकृष्यते, किंवा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यत इति। भ-
स एवायं प्रश्नः पुनरनुकृष्यत इति यद्युच्येत, द्वयोरात्मविषययोः प्र-
योरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्रश्नावित्यतो न मह-
त्रयाणां प्रश्नोपन्यासाविति। अथान्योऽयमपूर्वः प्रश्न उत्थाप्यत इति
ततो यथैव वरप्रदानव्यतिरेकेण प्रश्नकल्पनायामदोष एवं प्रश्न-
केणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति। अत्रोच्यते
वयमिह वरप्रदानव्यतिरेकेण प्रश्नं कंचित्कल्पयामो वाक्योप[क्रम]-
ध्यात्। वरप्रदानोपक्रमा[3] हि मृत्युनचिकेतःसंवादरूपा वाक्य[प्रवृत्तिरा]
समाप्तेः कठवल्लीनां लक्ष्यते। मृत्युः किल नचिकेतसे पित्रा प्र-
त्रीन्वरान्प्रददौ। नचिकेताः किल तेषां प्रथमेन वरेण पितुः [सौमनस्यं]
वव्रे, द्वितीयेनाग्निविद्याम्, तृतीयेनात्मविद्याम्, 'येयं प्रेते' इति प-

1 प्रेते मृते। देहादन्योऽस्ति नवेति संशयः, अस्ति अत एतदात्मतत्त्वं
जानीयामित्यर्थः। 2 श्रुतमुपासनम्। 3 वरप्रदानमुपक्रमो यस्याः सा। 4 य-
यमलोकं प्रति प्रेषिताय।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

णामेष वरस्तृतीयः' (का० १।१।२०) इति लिङ्गात् । तत्र यद्यन्यत्र धर्मादित्यन्योऽयमपूर्वः प्रश्न उत्थाप्येत ततो वरप्रदानव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत । ननु प्रष्टव्यभेदादपूर्वोऽयं प्रश्नो भवितुमर्हति । पूर्वो हि प्रश्नो जीवविषयः । येयं प्रेते विचिकित्सा मनुष्येऽस्ति नास्तीति विचिकित्साभिधानात् । जीवश्च धर्मादिगोचरत्वान्नान्यत्र[1] धर्मादिति प्रश्नमर्हति । प्राज्ञस्तु धर्माद्यतीतत्वादन्यत्र धर्मादिति प्रश्नमर्हति । प्रश्नच्छाया च न समाना लक्ष्यते । पूर्वस्यास्तित्वनास्तित्वविषयत्वादुत्तरस्य धर्माद्यतीतवस्तुविषयत्वात् । तस्मात्प्रत्यभिज्ञानाभावात्प्रश्नभेदः । न पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेत् । न । जीवप्राज्ञयोरेकत्वाभ्युपगमात् । भवेत्प्रष्टव्यभेदात्प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात्स्यात् । न त्वन्यत्वमस्ति । तत्त्वमसीत्यादिश्रुत्यन्तरेभ्यः । इह चान्यत्र धर्मादित्यस्य प्रश्नस्य प्रतिवचनं 'न जायते म्रियते वा विपश्चित्' इति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति । सति हि प्रसङ्गे प्रतिषेधो भागी[2] भवति । प्रसङ्गश्च जन्ममरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति न परमेश्वरस्य । तथा—'स्वप्नान्तं[3] जागरितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥' (का० २।४।४) इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन्न प्राज्ञादन्यो जीव इति दर्शयति प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः । तथाग्रे—'यदेवेह[4] तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' (का० २।४।१०) इति जीवप्राज्ञभेददृष्टिमपवदति । तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरम् 'अन्यं वरं नचिकेतो वृणीष्व' इत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल, तदैनं मृत्युरभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च 'विद्याभी-

---

१ गोचरत्वादाश्रयत्वात् । २ भागी युक्तः । ३ अन्तोऽवस्था । येन साक्षिणा प्रमाता पश्यति तमात्मानमिति संबन्धः । ४ इह देहे यच्चैतन्यं तदेवामुत्र सूर्यादौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्सिनं नचिकेतसं मन्ये न त्वा कामा बह्वोऽलोलुपन्त' (का०
२।४ ) इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन्यदुवाच—'तं दुर्द
मनुप्रविष्टं गुहाहितं गह्वरेष्टं पुराणम् । अध्यात्मयोगाधिगमेन दे
धीरो हर्षशोकौ जहाति ॥' ( का० १।२।१२ ) इति,
जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते ।
निमित्तां च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेता यदि तं
प्रशंसानन्तरमन्यमेव प्रश्नमुपक्षिपेदस्थान एव सा सर्वा प्रशंसा
रिता स्यात् । तस्मात् 'येयं प्रेते' इत्यस्यैव प्रश्नस्यैतदनुकर्पणम्
धर्मात्' इति । यत्तु प्रश्नच्छायावैलक्षण्यमुक्तं तददूपणम् ।
विशेषस्य पुनः पृच्छ्यमानत्वात् । पूर्वत्र हि देहादिव्यतिरिक्त
ऽस्तित्वं पृष्टमुत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति याव
न निवर्तते तावद्धर्मादिगोचरत्वं जीवस्य जीवत्वं च न निवर्तते ।
वृत्तौ तु प्राज्ञ एव तत्त्वमसीति श्रुत्या प्रत्याय्यते । नचा
तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति । यथा कश्चित्संतमसे
कांचिद्रज्जुमहिं मन्यमानो भीतो वेपमानः पलायते, तं चापरो
मैपीर्नायमही रज्जुरेवेति । स च तदुपश्रुत्याहिकृतं भयमु
पलायनं च । नत्वहिबुद्धिकाले तदपगमकाले च वस्तुनः क
स्यात् । तथैवैतदपि द्रष्टव्यम् । ततश्च 'न जायते म्रियते वा'
थपि भवत्यस्तित्वप्रश्नस्य प्रतिवचनम् । सूत्रं त्वविद्याकल्पित
भेदापेक्षया योजयितव्यम् । एकत्वेऽपि ह्यात्मविषयस्य प्रश्नस्य
वस्थायां देहव्यतिरिक्तास्तित्वमात्रविचिकित्सनात्कर्तृत्वादिसंसार
नपोहनाच्च पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रेक्ष्यते । उत्तरस्य
द्यत्ययसंकीर्तनात्प्राज्ञविषयत्वमिति । ततश्च युक्ताग्निजीवपरमात्म
प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिव
वैषम्यम् ॥ ६ ॥

---

१ यस्मिन् प्रश्नो यत्प्रश्नस्तं विहायेत्यर्थः । २ विशेषोक्तिसमासौ इ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## महद्वच्च ॥ ७ ॥

यथा महच्छब्दः सांख्यैः सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽभिधत्ते । 'बुद्धेरात्मा महान्परः' ( का० १।३।१० ), 'महान्तं विभुमात्मानम्' ( का० १।२।२२ ), 'वेदाहमेतं पुरुषं महान्तम्' ( श्वे० ३।८ ) इत्येवमादावात्मशब्दप्रयोगादिभ्यो हेतुभ्यः । तथाव्यक्त-शब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति । अतश्च नास्त्यानुमा-निकस्य शब्दवत्त्वम् ॥ ७ ॥

## २ चमसाधिकरणम् । सू० ८–१०

## चमसवदविशेषात् ॥ ८ ॥

पुनरपि प्रधानवाद्यशब्दत्वं प्रधानस्यासिद्धमित्याह । कस्मात् । मन्त्र-वर्णात्—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' ( श्वे० ४।५ ) इति । अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दै रजःसत्त्वतमांस्यभिधीयन्ते । लोहितं रजो रञ्जनात्मकत्वात् । शुक्लं सत्त्वं प्रकाशात्मकत्वात् । कृष्णं तम आवरणात्मकत्वात् । तेषां साम्यावस्थाऽवयवधर्मैर्व्यपदिश्यते लोहित-शुक्लकृष्णेति । न जायत इति चाजा स्यात्, 'मूलप्रकृतिरविकृतिः' इत्यभ्युपगमात् । नन्वजाशब्दश्छागायां रूढः । बाढम् । सा तु रूढि-रिह नाश्रयितुं शक्या, विद्याप्रकरणात् । सा च बह्वीः प्रजास्त्रैगुण्या-न्विता जनयति । तां प्रकृतिमज एकः पुरुषो जुषमाणः प्रीयमाणः सेव-मानो वानुशेते । तामेवाविद्ययात्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमि-त्यविवेकतया संसरति । अन्यः पुनरजः पुरुष उत्पन्नविवेकज्ञानो विरक्तो

---

१ अजामेकां—न जायत इत्यजा तां मूलप्रकृतिं लोहितशुक्लकृष्णां रजःसत्वतमोगुणां रूपास्त्रिगुणात्मिकाः प्रजा जनयन्तीं एकोऽजो जीवस्तां शब्दादिविषयरूपतापन्नां जुष-माणः सन्ननुशेते निरन्तरं भुङ्क्ते । जीवेन भुक्तो भोगो यस्या यस्यां वा तां जीवेन भुज्यमानामन्यः परमात्मा जहाति नास्यामासक्तिं करोति । २ अवयवाः प्रधानस्य रजआदयस्तेषां धर्मा रञ्जकत्वादयस्तैः । ३ प्रजायन्त इति प्रजा महदादयः । त्रैगुण्यं सुखदुःखमोहाः । ४ अत्रात्मत्वं तादात्म्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जहात्येनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति । मुक्त...
र्थः । तस्माच्छ्रुतिमूलैव प्रधानादिकल्पना कापिलानामिति । ...
ब्रूमः—नानेन मन्त्रेण श्रुतिमत्त्वं सांख्यवादस्य शक्यमाश्रयितुम् । ना...
मन्त्रः स्वातन्त्र्येण कंचिदपि वादं समर्थयितुमुत्सहते । सर्वत्रापि ...
कयाचित्कल्पनयाऽजात्वादिसंपादनोपपत्तेः । सांख्यवाद एवेह...
इति विशेषावधारणकारणाभावात् । चमसवत् । यथाहि 'अ...
ग्विलश्चमस ऊर्ध्वबुध्नः' ( बृ० २।२।३ ) इत्यस्मिन्मन्त्रे स्वात...
नामासौ चमसोऽभिप्रेत इति न शक्यते निरूपयितुम् । सर्वत्रापि ...
कथंचिदर्वाग्बिलत्वादिकल्पनोपपत्तेः । एवमिहाप्यविशेषोऽजामेका...
मन्त्रस्य । नास्मिन्मन्त्रे प्रधानमेवाजाभिप्रेतेति शक्यते नियन्तुम् ।

तत्र तु 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति वाक्य...
मसविशेषप्रतिपत्तिर्भवति । इह पुनः केयमजा प्रतिपत्तव्येति । अत्र ...

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥**

परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य...
ग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या । तुशब्दोऽवधारणार्थः । गुण...
त्रयलक्षणैवेयमजा विज्ञेया न गुणत्रयलक्षणा । कस्मात् । तथाह्येके ...
नस्तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपता...
न्ति—'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं ...
इति । तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते रोहितादिशब्दसामा...
रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वाद्भाक्तत्वाच्च गु...
त्वस्य । असंदिग्धेन च संदिग्धस्य निगमनं न्याय्यं मन्यन्ते । ...
'ब्रह्मवादिनो वदन्ति । किंकारणं ब्रह्म' ( श्वे० १।१ ) इत्युपक्रम्य...
ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' ( श्वे० ...
इति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽव...

१ शब्दाद्युपलब्धिर्भोगः । गुणपुरुषान्यताधीरपवृज्यतेऽनेनेत्यपवर्गः । ...
श्छन्दोगाः । ३ ते ब्रह्मवादिनोऽनया रीत्या विमृश्य ध्यानयोगेनानुगता...
त्मानमनु प्रविष्टाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाक्यशेषेऽपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति 'यो योनिं योनिमधितिष्ठत्येकः' (श्वे० ४।१०,११) इति च तस्या एवावगमान्न स्वतन्त्रा काचित्प्रकृतिः प्रधानं नामाजामन्त्रेणाम्नायत इति शक्यते वक्तुम् । प्रकरणात्तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायत इत्युच्यते । तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम् ॥ ९ ॥

कथं पुनस्तेजोबन्नात्मना त्रैरूप्येण त्रिरूपाजा प्रतिपत्तुं शक्यते । यावता न तावत्तेजोबन्नेष्वजाकृतिरस्ति । नच तेजोबन्नानां जातिश्रवणाजातिनिमित्तोऽप्यजाशब्दः संभवतीति । अत उत्तरं पठति—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥

नायमजाकृतिनिमित्तोऽजाशब्दः । नापि यौगिकः । किं तर्हि कल्पनोपदेशोऽयम् । अजारूपकक्लृप्तिस्तेजोबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते । यथाहि लोके यदृच्छया काचिदजा लोहितशुक्लकृष्णवर्णा स्याद्[2]बहुबर्करा सरूपबर्करा च, तां च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभोगां जह्यात्, एवमियमपि तेजोबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यत इति । नचेदमाशङ्कितव्यमेकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति । नहीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा किंतु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा । प्रसिद्धं तु भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते । भेदस्तूपा[1]धिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभ्यः । मध्वादिवत् । यथा आदित्यस्यामधुनो मधुत्वम् ( छा० ३।१ ), वाचश्चाधेनोर्धेनुत्वम् ( बृ० ५।८ ), द्युलोकादीनां चानग्नीनामग्नित्वम् ( बृ०

१ अविद्याशक्तिर्योनिः सा च प्रतिजीवं नानेत्युक्तमतो वीप्सोपपन्ना । २ बहुबर्करा बहुशावा । बर्करो बालपशुः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

८।२।९ ) इत्येवंजातीयकं कल्प्यते, एवमिदमनजाया अजात्वं तद्वा
इत्यर्थः । तस्माद्विरोधस्तेजोवन्नेष्वजाशब्दप्रयोगस्य ॥ १० ॥

### ३ संख्योपसंग्रहाधिकरणम् । सू० ११–१३

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ ११ ॥**

एवं परिहृतेऽप्यजामन्त्रे पुनरन्यस्मान्मन्त्रात्सांख्यः प्रत्यव
'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य
विद्वान्ब्रह्मामृतोऽमृतम्' ( बृ० ४।४।१७ ) इति । अस्मिन्मन्त्रे पञ्च
जना इति पञ्चसंख्याविषयाऽपरा पञ्चसंख्या श्रूयते पञ्च
दर्शनात् । त एते पञ्चपञ्चकाः पञ्चविंशतिः संपद्यन्ते । तया
विंशतिसंख्यया यावन्तः संख्येया आकाङ्क्ष्यन्ते तावन्त्येव च
सांख्यैः संख्यायन्ते—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' ( सांख्य
इति । तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृ
द्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्र
दीनाम् । ततो ब्रूमः—न संख्योपसंग्रहादपि प्रधानादीनां
मत्त्वं प्रत्याशा कर्तव्या । कस्मात् । नानाभावात् । नाना
पञ्चविंशतिस्तत्त्वानि । नैषां पञ्चशः पञ्चशः साधारणो
ऽस्ति, येन पञ्चविंशतेरन्तराले पराः पञ्च पञ्चसंख्या नि
नह्येकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः संख्या निवि
अथोच्येत पञ्चविंशतिसंख्यैवेयमवयवद्वारेण लक्ष्यते, यथा
ष वर्षाणि न ववर्ष शतक्रतुः' इति द्वादशवार्षिकीमनावृष्टिं

---

१ मूलप्रकृतिरविकृतिः अन्यस्य कस्यचिद्विकारो न । महदहंकारपञ्चतन्मा
प्रकृतिविकृतयः । महानहंकारस्य प्रकृतिर्मूलप्रकृतेर्विकृतिः । अहंकारोऽपि त
त्राणां प्रकृतिः । सात्त्विकादयस्त्वेकादशेन्द्रियाणां तन्मात्राण्याकाशादीनां
प्रकृतयः । पञ्चभूतान्येकादशेन्द्रियाणि षोडशको गणो विकार एव ।
घटादिप्रकृतित्वेऽपि तत्त्वान्तराप्रकृतित्वाद्विकृतय एव । पुरुषस्तु कौटस्थ्यात्प्र
त्वविरहीत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्वदिति । तदपि नोपपद्यते । अयमेवास्मिन्पक्षे दोषो यल्लक्षणाश्रयणीया स्यात् । परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति, पारिभाषिकेण स्वरेणैकपदत्वनिश्चयात् । प्रयोगान्तरे च 'पञ्चानां त्वा पञ्चजनानाम्' ( तै० १।६।२।२ ) इत्येकपदैकस्वर्यैकविभक्तिकत्वावगमात् । समस्तत्वाच्च न वीप्सा पञ्च पञ्चेति । नच पञ्चकद्वयग्रहणं पञ्च पञ्चेति । नच पञ्चसंख्याया एकस्याः पञ्चसंख्यया परया विशेषणं पञ्च पञ्चका इति । उपसर्जनस्य विशेषणेनासंयोगात् । नन्वापन्नपञ्चसंख्याका जना एव पुनः पञ्चसंख्यया विशेष्यमाणाः पञ्चविंशतिः लेष्यन्ते । यथा पञ्च पञ्चपूल्य इति पञ्चविंशतिपूलाः प्रतीयन्ते द्वत् । नेति ब्रूमः । युक्तं यत्पञ्चपूलीशब्दस्य समाहाराभिप्रायत्वाप्रतीति सत्यां भेदाकाङ्क्षायां पञ्च पञ्चपूल्य इति विशेषणम् । इह तु पञ्च जना इत्यादित एव भेदोपादानात्कतीत्यसत्यां भेदाकाङ्क्षायां न पञ्च पञ्चजना इति विशेषणं भवेत् । भवदपीदं विशेषणं पञ्चसंख्याया एव भवेत्, तत्र चोक्तो दोषः । तस्मात्पञ्च पञ्चजना इति न पञ्चविंशतितत्त्वाभिप्रायम् । अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायम् । अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसंख्यायाः । आत्मा तावदिह प्रतिष्ठां प्रत्याधारत्वेन निर्दिष्टः । यस्मिन्निति सप्तमीसूचितस्य तमेव मन्य आत्मानम्' इत्यात्मत्वेनानुकर्षणात् । आत्मा च चेतनः स्वरूपः । स च पञ्चविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं युज्यते । अर्थान्तरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत । तथा 'आकाशश्च प्रतिष्ठितः' इत्याकाशस्यापि पञ्चविंशतान्तर्गतस्य न पृथगुपादानं न्याय्यम् । अर्थान्तरपरिग्रहे चोक्तं दूषणम् । कथं च संख्यामात्रश्रवणे सत्यश्रुतानां पञ्चविंशतितत्त्वानामुपसंग्रहः प्रतीयते । जनशब्दस्य तत्त्वेष्वरूढत्वात् । अर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेः । कथं तर्हि पञ्च पञ्चजना इति । उच्यते—'दिक्संख्ये संज्ञायाम्' ( पा० सू० २।१।५० ) इति विशेषणस्मरणात्संज्ञायामेव

---

१ भेदो विशेषणम् । २ अतिरेक आधिक्यम् । ३ उक्तदोषः संख्याधिक्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पञ्चशब्दस्य जनशब्देन समासः । ततश्च रूढत्वाभिप्राये
त्पञ्चजना नाम विवक्ष्यन्ते न सांख्यतत्त्वाभिप्रायेण । ते
माकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते । पञ्चजना नाम ये
पञ्चैवेत्यर्थः । सप्तर्षयः सप्तेति यथा ॥ ११ ॥

के पुनस्ते पञ्चजना नामेति, तदुच्यते—

**प्राणादयो वाक्यशेषात् ॥ १२ ॥**

'यस्मिन्पञ्च पञ्चजनाः' इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूप
प्राणादयः पञ्च निर्दिष्टाः—'प्राणस्य प्राणमुत[1] चक्षुषश्चक्षुरुत
श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति । तेऽत्र वाक्य
संनिधानात्पञ्चजना विवक्ष्यन्ते । कथं पुनः प्राणादिषु जनशब्द[2]
तत्त्वेषु वा कथं जनशब्दप्रयोगः । समाने तु प्रसिद्ध्यतिक्रमे
शेषवशात्प्राणादय एव ग्रहीतव्या भवन्ति । जनसंबन्धाच्च
जनशब्दभाजो भवन्ति । जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः
पञ्च ब्रह्मपुरुषाः' (छा० ३।१३।६) इत्यत्र । 'प्राणो ह पिता प्राणो
(छा० ७।१५।१) इत्यादि च ब्राह्मणम् । समासबलाच्च
रूढत्वमविरुद्धम् । कथं पुनरसति प्रथमप्रयोगे रूढिः शक्या
शक्योद्भिदादिवदित्याह । प्रसिद्धार्थसंनिधाने ह्यप्रसिद्धार्थः शब्द
मानः समभिव्याहारात्तद्विषयो नियम्यते, यथा 'उद्भिदा
छिनत्ति' 'वेदिं करोति' इति । तथायमपि पञ्चजनशब्दः स
ख्यानादवगतसंज्ञाभावः संज्ञाकाङ्क्षी वाक्यशेषसमभिव्याहृत
दिषु वर्तिष्यते । कैश्चित्तु देवाः पितरो गन्धर्वा असुरा
पञ्च पञ्चजना व्याख्याताः । अन्यैश्च चत्वारो वर्णा निषा[3]
परिगृहीताः । क्वचिच्च 'यत्पाञ्चजन्यया विशा' (ऋ० सं०
इति प्रजापरः प्रयोगः पञ्चजनशब्दस्य दृश्यते । तत्परिग्रहे

१ उतशब्दोऽप्यर्थः । ये प्राणादिप्रेरकं तत्साक्षिणमात्मानं विदुस्ते
२ जनवाचकः शब्दो जनशब्दः । पञ्चजनशब्द इति यावत् । ३
ज्जातो निषादः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

श्चिद्विरोधः । आचार्यस्तु न पञ्चविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवं-
रतया 'प्राणादयो वाक्यशेषात्' इति जगाद ॥ १२ ॥

भवेयुस्तावत्प्राणादयः पञ्चजना माध्यंदिनानां येऽन्नं प्राणादिष्वाम-
न्ति । काण्वानां तु कथं प्राणादयः पञ्चजना भवेयुर्येऽन्नं प्राणादिषु
मनन्तीति । अत उत्तरं पठति—

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

असत्यपि काण्वानामन्ने ज्योतिषा तेषां पञ्चसंख्या पूर्येत । तेऽपि
'यस्मिन्पञ्च पञ्चजनाः' इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणा-
य ज्योतिरधीयते—'तद्देवा ज्योतिषां ज्योतिः' इति । कथं पुनरुभये-
मपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्चसंख्यया
षांचिद्गृह्यते केषांचिन्नेति । अपेक्षाभेदादित्याह । माध्यंदिनानां हि
मानमन्त्रपठितप्राणादिपञ्चजनलाभान्नास्मिन्मन्त्रान्तरपठिते ज्योतिष्य-
क्षा भवति । तदलाभात्तु काण्वानां भवत्यपेक्षा । अपेक्षाभेदाच्च समा-
ऽपि मन्त्रे ज्योतिषो[1] ग्रहणाग्रहणे । यथा समानेऽप्यतिरात्रे वचनभे-
त्षोडशिनो ग्रहणाग्रहणे तद्वत् । तदेवं न तावच्छ्रुतिप्रसिद्धिः काचि-
धानविषयास्ति । स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥ १३ ॥

### ४ कारणत्वाधिकरणम् । सू० १४–१५

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १४ ॥

प्रतिपादितं ब्रह्मणो लक्षणम् । प्रतिपादितं च ब्रह्मविषयं गतिसा-
न्यं वेदान्तवाक्यानाम् । प्रतिपादितं च प्रधानस्याशब्दत्वम् । तत्रेदम-
माशङ्कते—न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं
दान्तवाक्यानां प्रतिपत्तुं शक्यम् । कस्मात् । विगानदर्शनात् ।
तिवेदान्तं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात्[2] । तथाहि—
चित् 'आत्मन आकाशः संभूतः' (तै० २।१) इत्याकाशादिका

---

1 अत्र षोडशिग्रहणाग्रहणवद्वाक्यभेदाज्ज्योतिषो विकल्पः । २ आदिग्रहणाद-
नोऽपि गृह्यते ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सृष्टिराम्नायते। क्वचित्तेजआदिका—'तत्तेजोऽसृजत' (छा० ६।२।३) इति। क्वचित्प्राणादिका—'स प्राणमसृजत प्राणाच्छ्रद्धाम्' (प्र० ६।४) इति क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते—'स इमाँल्लोकानसृजत। अम्भो मरीचीर्मरमापः' (ऐ० उ० ४।१।२) इति। तथा क्वचिदसत्पूर्विका सृष्टिः पठ्यते—'असद्वा इदमग्र आसीत्। ततो वै सदजायत' (तै० २।७) इति। 'असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्' (छा० ३।१९।१) इति च। क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते—'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्युपक्रम्य 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्' (छा० ६।२।१,२) इति। क्वचित्स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते—'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' (बृ० १।४।७) इति। एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या। स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति। एवं प्राप्ते ब्रूमः—सत्यपि प्रतिवेदान्तं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किंचिद्विगानमस्ति। कुतः? यथाव्यपदिष्टोक्तेः। यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टस्तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते। तद्यथा—'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१) इति। अत्र तावज्ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयदपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत्। तद्विषयेणैवात्मशब्देन शरीरादिकोशपरंपरया चान्तरनुप्रवेशनेन सर्वेषामन्तरात्मानं निरधारयत्। 'बहु स्यां प्रजायेय' (तै० २।६) इति चात्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां

१ अम्मयशरीरप्रचुरस्वर्गलोकोऽम्भःशब्दार्थः। सूर्यरश्मिव्याप्तोऽन्तरिक्षलोको मरीचयः। मरो मरणधर्मा मर्त्यः। अब्बहुलाः पातालेलोक आप इति। २ प्रक्रिया सृष्टिः। ३ तत्र तत्र कारणे। एके शाखिनः। ४ तद्विषयेण ब्रह्म

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भापत । तथा 'इदं सर्वमसृजत । यदिदं किंच' ( तै० २।६ ) इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीयं स्रष्टारमाचष्टे । तदत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञातं तल्लक्षणमेवान्यत्रापि विज्ञायते—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' 'तदैक्षत बहु स्यां प्रजायेयेति । तत्तेजोऽसृजत' ( छा० ६।२।१,३ ) इति । तथा 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्[1] । स ईक्षत लोकान्नु सृजै' ( ऐ० उ० ४।१।१,२ ) इति च । एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात्[2] । कार्यविषयं तु विगानं दृश्यते क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिकेत्येवंजातीयकम् । नच कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुम् । अतिप्रसङ्गात् । समाधास्यति चाचार्यः कार्यविषयमपि विगानं 'न वियदश्रुतेः' ( ब्र० सू० २।३।१ ) इत्यारभ्य भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात् । नह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः । नहि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा । नच कल्पयितुं शक्यते, उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात् । दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—'अन्नेन सोम्य शुङ्गेनापो[3] मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' ( छा० ६।८।४ ) इति । मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते । तथाच संप्रदायविदो वदन्ति—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा[4] । उपायः सोऽवताराय नास्ति भेदः कथंचन ॥' ( माण्डू० ३।१५ ) इति । ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते—'ब्रह्मविदाप्नोति परम्' ( तै०

---

१ मिषत् सव्यापारम् । २ अविरुद्धार्थकत्वात् । ३ शुङ्गेन कार्येण । ४ अत्रान्यथान्यथेति सा द्रष्टव्या । अवताराय ब्रह्मधीजन्मने । अतस्तदन्यथात्वेऽपि ब्रह्मणि न भेदः । विगानं न ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२।१ )' 'तरति शोकमात्मवित्' ( छा० ७।१।३ ) 'तमेव वि
मृत्युमेति' ( श्वे० ३।८ ) इति । प्रत्यक्षावगमं चेदं फलम् । '
इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥ १४ ॥

यत्पुनः कारणविषयं विगानं दर्शितम्—'असद्वा इदमग्र
इत्यादि तत्परिहर्तव्यम् । अत्रोच्यते—

## समाकर्षात् ॥ १५ ॥

'असद्वा इदमग्र आसीत्' (तै० २।७) इति नात्रासन्निरात्मकं
श्राव्यते । यतः 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति
चेद्वेद । सन्तमेनं ततो विदुः' इत्यसद्वादापवादेनास्तित्वलक्षणं
अन्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य 'सोऽकामयत' इ
प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा 'तत्सत्यमि
इति चोपसंहृत्य 'तदप्येपः श्लोको भवति' इति तस्मिन्नेव प्रकृते
मिममुदाहरति—'असद्वा इदमग्र आसीत्' इति । यदि त्वस
मस्मिञ्छ्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्पणेऽन्यस्योदाहरणादसंबद्ध
मापद्येत । तस्मान्नामरूपव्याकृतवस्तुविपयः प्रायेण सच्छब्दः
इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवा
पचर्यते । एपैव 'असदेवेदमग्र आसीत्' ( छा० ३।१९।१ )
योजना । 'तत्सदासीत्' इति समाकर्पणात् । अत्यन्ताभावा
हि तत्सदासीदिति किं समाकृष्येत । 'तद्धैक आहुरसदेवेदमग्र
( छा० ६।२।१ ) इत्यत्रापि न श्रुत्यन्तराभिप्रायेणायमेकीयमतोप
क्रियायामिव वस्तुनि विकल्पस्यासंभवात् । तस्माच्छ्रुतिप
सत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यास
इति द्रष्टव्यम् । 'तद्धेदं तर्ह्यव्याकृतमासीत्' ( बृ० १।४।७
त्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते, 'स एप इ
आनखाग्रेभ्यः' इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समा

---

१ तत् तत्र ब्रह्मणि । श्लोको मन्त्रः । २ अध्यक्षः कर्ता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना स इत्यनेन
र्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत । चेतनस्य चायमा-
नः शरीरेऽनुप्रवेशः श्रूयते । प्रविष्टस्य चेतनत्वश्रवणात्
श्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनः' इति । अपिच यादृशमिद-
द्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियत एवमादि-
र्गेऽपीति गम्यते । दृष्टविपरीतकल्पनानुपपत्तेः । श्रुत्यन्तरमपि 'अनेन
वेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६।३।२) इति
ध्यक्षामेव जगतो व्याक्रियां दर्शयति । व्याक्रियत इत्यपि कर्मकर्तरि
कारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः । यथा लूयते
दारः स्वयमेवेति सत्येव पूर्णके लवितरि । यद्वा कर्मण्येवैष लकारो-
र्थाक्षिप्तं कर्तारमपेक्ष्य द्रष्टव्यः । यथा गम्यते ग्राम इति ॥ १५ ॥

## ५ बालाक्यधिकरणम् । सू० १६–१८

### जगद्वाचित्वात् ॥ १६ ॥

कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—'यो वै बालाक
तेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वेदितव्यः' (कौ० ब्रा०
।१९) इति । तत्र किं जीवो वेदितव्यत्वेनोपदिश्यत उत मुख्यः
ण उत परमात्मेति विशयः । किं तावत्प्राप्तम् । प्राण इति ।
तः । 'यस्य वैतत्कर्म' इति श्रवणात् । परिस्पन्दलक्षणस्य च कर्मणः
णाश्रयत्वात् । वाक्यशेषे च 'अथास्मिन्प्राण एवैकधा भवति'
ति प्राणशब्ददर्शनात् । प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात् ।
चैते पुरस्ताद्बालाकिना 'आदित्ये पुरुषश्चन्द्रमसि पुरुषः' इत्येव-
दयः पुरुषा निर्दिष्टास्तेषामपि भवति प्राणः कर्ता प्राणावस्थाविशेष-
ादादित्यादिदेवतात्मनाम् । 'कतम एको देव इति प्राण इति
ब्रह्म त्यदित्याचक्षते' (बृ० ३।९।९) इति श्रुत्यन्तरप्रसिद्धेः ।

---

१ चक्षुर्द्रष्टा, श्रोत्रं श्रोता, मनो मन्तेत्युच्यते । २ अद्यत्वे इदानीम् । ३ एतज्जगदस्य
र्म । क्रियत इति व्युत्पत्त्या कार्यमित्यर्थः । ४ स प्राणः । त्यत् परोक्षम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवो वायमिह वेदितव्यतयोपदिश्यते । तस्यापि धर्माधर्मल
शक्यते श्रावयितुम् 'यस्य वैतत्कर्म' इति । सोऽपि भोक्तृत्वा
भूतानामेतेषां पुरुषाणां कर्तोपपद्यते । वाक्यशेषे च जीवलिङ्ग
यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बा
बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात्प्रा
भोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं
प्रतिबोधयति । तथा परस्तादपि जीवलिङ्गमवगम्यते—'तद्य
स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भु
वैत आत्मान एतमात्मानं भुञ्जन्ति' (कौ० ब्रा० ४।२०) इति । प्रा
जीवस्योपपन्नं प्राणशब्दत्वम् । तस्माज्जीवमुख्यप्राणयोरन्यतर इह
परमेश्वरः, तल्लिङ्गानवगमादिति । एवं प्राप्ते ब्रूमः—परमेश्वर ए
पुरुषाणां कर्ता स्यात् । कस्मात् । उपक्रमसामर्थ्यात् । इह हि
रजातशत्रुणा सह 'ब्रह्म ते ब्रवाणि' इति संवदितुमुपचक्रमे । स
चिदादित्याद्यधिकरणान्पुरुषानमुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं
तमजातशत्रुः 'मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणि'
ब्रह्मवादितयापोद्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप । यदि
ख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो बाध्येत । तस्मात्परमेश्वर
भवितुमर्हति । कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य
णावकल्पते । 'यस्य वैतत्कर्म' इत्यपि नायं परिस्पन्दलक्षण
धर्मलक्षणस्य वा कर्मणो निर्देशः । तयोरन्यतरस्याप्यप्र
असंशब्दितत्वाच्च । नापि पुरुषाणामयं निर्देशः । एतेषां
कर्तेत्येव तेषां निर्दिष्टत्वात् । लिङ्गवचनविगानाच्च नापि पु
करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः, कर्तृशब्देनैव तयो
पारिशेष्यात्प्रत्यक्षसंनिहितं जगत्सर्वनाम्नैतच्छब्देन निर्दिश्यते
इति च तदेव जगत्कर्म । ननु जगदप्यप्रकृतमसंशब्दितं
वत् । तथाप्यसति विशेषोपादाने साधारणेनार्थेन संनिधा

१ यत्कारणं यस्माज्जीवं बोधयति तस्मादस्ति प्रमोत्थापनं जीवलिङ्ग

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तवस्तुमात्रस्यायं निर्देश इति गम्यते न विशिष्टस्य कस्यचित्। विशेषसं-
धानाभावात्। पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादाना-
विशेषितं जगदेवेहोपादीयत इति गम्यते। एतदुक्तं भवति—य एतेषां
पाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण, यस्य कृत्स्नमेव
गदविशेषितं कर्मेति। वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः।
वालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तितास्तेषामब्रह्मत्वख्यापनाय
शेषोपादानम्। एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां
गतः कर्ता वेदितव्यतयोपदिश्यते। परमेश्वरश्च सर्वजगतः कर्ता सर्व-
न्तेष्ववधारितः॥ १६॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्॥ १७॥

अथ यदुक्तं वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवा-
तरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति। तत्परिहर्तव्यम्। यत्रो-
च्यते—परिहृतं चैतत् 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र०
० १।१।३१) इत्यत्र। त्रिविधं ह्यत्रोपासनमेवं सति प्रसज्येत
जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चैतन्न्याय्यम्।
उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते। तत्रो-
पक्रमस्य तावद्ब्रह्मविषयत्वं दर्शितम्। उपसंहारस्यापि निरतिशयफलश्र-
वणाद्ब्रह्मविषयत्वं दृश्यते—'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां
श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति। नन्वेवं सति
प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत। न निर्णीयते। 'यस्य
वैतत्कर्म' इत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात्। तस्मादत्र जीव-
मुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते। प्राणशब्दोऽपि ब्रह्मविषयो
दृष्टः 'प्राणबन्धनं हि सोम्य मनः' (छा० ६।८।२) इत्यत्र। जीवलिङ्ग-
मुपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम्॥ १७॥

---

१ ब्राह्मणा भोजयितव्याः परिव्राजकाश्चेत्युक्ते सामान्यविशेषाभ्यां संनिहितसर्वब्राह्म-
णग्रहणवद्। २ श्रेष्ठ्यं गुणाधिक्यम्, आधिपत्यं नियन्तृत्वम्, स्वाराज्यमनियम्यत्वमिति भेदः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥**

अपिच नैवात्र विवदितव्यं जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति । यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते । कस्मात् । प्रश्नव्याख्यानाभ्याम् । प्रश्ने सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क वा एतदभूत्कुत एतदागात्' ( कौ० ब्रा० ४।१९ ) इति । प्रतिवचनमपि—'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इति, 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' ( कौ० ब्रा० ४।२० ) इति च । सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति । परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा । तस्माद्यत्रास्य जीवस्य निःसंबोधतास्वच्छतारूप उपाधिजनितविशेषविज्ञानरहितं स्वरूपं, यतस्तद्भ्रंशरूपमागमनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते । अपिचैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति—'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्' ( बृ० २।१।१६ ) इति प्रश्ने। प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति । आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तराकाशः' ( छा० ८।१।१ ) इति । 'सर्वं एत आत्मनो व्युच्चरन्ति' इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यते । प्राणनिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युपगन्तव्यः ॥

### ६ वाक्यान्वयाधिकरणम् । सू० १९—२२

**वाक्यान्वयात् ॥ १९ ॥**

बृहदारण्यके मैत्रेयीब्राह्मणेऽधीयते—'न वा अरे पत्युः

---

१ निःसंबोधता विशेषधीशून्यता । स्वच्छता विक्षेपमलशून्यत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्युपक्रम्य 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृ० ४।५।६) इति, तत्रैतद्विचिकित्स्यते—किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यत आहोस्वित्परमात्मेति । कुतः पुनरेषा विचिकित्सा । प्रियसंसूचितेनात्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति । तथात्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति । किं तावत्प्राप्तम् । विज्ञानात्मोपदेश इति । कस्मात् । उपक्रमसामर्थ्यात् । पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगदात्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानमुपक्रम्यानन्तरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्यान्यस्यात्मनः स्यात् । मध्येऽपि 'इदं[1] महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति । तथा 'विज्ञातारमरे[2] केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसंहरन्विज्ञानात्मानमेवेहोपदिष्टं दर्शयति । तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्यौपचारिकं द्रष्टव्यमिति । एवं प्राप्ते ब्रूमः—परमात्मोपदेश एवायम् । कस्मात् । वाक्यान्वयात् । वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानं प्रति अन्विताववयवं लक्ष्यते । कथमिति, तदुपपाद्यते—'अमृतत्वस्य तु नाशास्ति वित्तेन[3]' इति याज्ञवल्क्याद्युपश्रुत्य 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि' इत्यमृतत्वमाशासानाया मैत्रेय्या याज्ञवल्क्य आत्मविज्ञानमिदमुपदिशति । नचात्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति । तथा

---

१ इदं प्रत्यक्ष । महदपरिच्छिन्नम् । भूतं सत्यम् । अनन्तं नित्यम् । अपारं सर्वगतं एकरसम् । २ विज्ञातारं विज्ञानकर्तारम् । ३ न वित्तेन तत्साध्येन कर्मणेत्यर्थः । 'नान्यः पन्था', 'न कर्मणा' इत्यादयः श्रुतिवादाः । 'ज्ञानादेव तु कैवल्यं' इत्यादयः स्मृतिवादाः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चात्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञान-मवकल्पते । नचैतदौपचारिकमाश्रयितुं शक्यं, यत्कारणम- नेन सर्वविज्ञानं प्रतिज्ञायानन्तरेण ग्रन्थेन तदेवोपपादयति- परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिना । यो हि ब्रह्म जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मि तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्[1]पराकरोतीति भेददृष्टि सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमव दुन्दुभ्यादिदृष्टान्तैश्च (बृ० ४।५।८) तमेवाव्यतिरेकं द्रढयति महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृ० ४।५।११) इ प्रकृतस्यात्मनो [2]नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाणः पर गमयति । तथैवैकायन[3]प्रक्रियायामपि (बृ० ४।५।१२) सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्यैकायनमनन्तरमबाह्यं कृत्स्न घनं व्याचक्षाणः परमात्मानमेनं गमयति । तस्मात्परमात्म दर्शनाद्युपदेश इति गम्यते ॥ १९ ॥

यत्पुनरुक्तं प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं द्र इति, अत्र ब्रूमः—

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ २० ॥**

अस्त्यत्र प्रतिज्ञा 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भ सर्वं यदयमात्मा' इति च । तस्याः प्रतिज्ञायाः सिद्धिं सूचयत त्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम् । यदि हि विज्ञा मात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञा विज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत । तस्मात्प्रतिज्ञासिद्ध नात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते

**उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥**

विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसंपर्कात्क

---

१ पराकरोति श्रेयोमार्गाद्भ्रंशयति । २ ऋग्वेदादिकं नाम, इष्टं कु अयं च लोक इति रूपम् । ३ प्रक्रिया प्रकरणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः पर-
मात्मनैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते । श्रुति-
श्चैवं भवति—'एष संप्रसादोऽस्माच्छरीरा॑त्समुत्थाय परं ज्योतिरुपसं-
पद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा० ८।१२।३ ) इति । क्वचिच्च
स्वाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति—'यथा नद्यः स्यन्द-
मानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्वि-
मुक्तः परात्परं पुरुषमुपैति दिव्यम्' ( मुण्ड० ३।२।८ ) इति । यथा
लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्त्येवं जीवोऽपि
स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि तत्रार्थः प्रतीयते
दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥

अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदम-
भेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथाच ब्राह्मणम्—
'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ )
इत्येवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति । मन्त्रवर्णश्च—
'सर्वाणि रूपाणि विचित्य धीरो॑ नामानि कृत्वाभिवदन्यदास्ते' ( तै०
आ० ३।१२।७ ) इत्येवंजातीयकः । नच तेजःप्रभृतीनां सृष्टौ जीवस्य
पृथक्सृष्टिः श्रुता, येन परस्मादात्मनोऽन्यस्तद्विकारो जीवः स्यात् ।
काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो जीवो नान्य इति मतम् ।
आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं, तथापि प्रति-
ज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति
गम्यते । औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते
तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते, प्रतिपिपादयिषितार्थानु-
सारात् 'तत्त्वमसि' इत्यादिश्रुतिभ्यः । एवंच सति तज्ज्ञानादमृतत्वम-

१ समुत्थानमुत्क्रान्तिः । २ धीरः सर्वज्ञः । रूपाणि चराचराणि शरीराणि । विचित्य निर्माय । तेषां नामानि कृत्वा तत्रानुप्रविश्य । अभिवदन्नभिवदनादि कुर्वन् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वकल्पते । विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य
संबन्धे प्रलयप्रसङ्गान्न तज्ज्ञानादमृतत्वमवकल्पेत । अतश्च
नामरूपस्यासंभवादुपाध्याश्रयं नामरूपं जीव उपचर्यते । अत
रपि जीवस्य क्वचिदग्निविस्फुलिङ्गोदाहरणेन श्राव्यमाणोप
वेदितव्या । यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूते
स्थानं विज्ञानात्मभावेन दर्शयन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं
तत्रापीयमेव त्रिसूत्री योजयितव्या । 'प्रतिज्ञासिद्धेर्लिङ्गमाश
इदमत्र प्रतिज्ञातम्—'आत्मनि विदिते सर्वं विदितं भवति'
यदयमात्मा' ( बृह० २।४।६ ) इति च । उपपादितं च, सर्व
रूपकर्मप्रपञ्चस्यैकप्रसवत्वादेकप्रलयत्वाच्च दुन्दुभ्यादिदृष्टान्तैश्च
रणयोरव्यतिरेकप्रतिपादनात् । तस्या एव प्रतिज्ञायाः सिद्धिं
तल्लिङ्गं यन्महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञान
कथितमित्याश्मरथ्य आचार्यो मन्यते । अभेदे हि सत्येकविज्ञ
विज्ञानं प्रतिज्ञातमवकल्पत इति । 'उत्क्रमिष्यत एवंभावादित्यौ
उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्संप्रसन्नस्य
नैक्यसंभवादिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते ।
तेरिति काशकृत्स्नः' । अस्यैव परमात्मनोऽनेनापि विज्ञानात्म
स्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्य
च्छेदाभिधानमेतत् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुवि
प्रेत्य संज्ञास्ति' ( बृह० २।४।१२ ) इति, कथमेतदभेदाभिधा
दोषः । विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानं
भिप्रायम् । 'अत्रैव मा भगवानमूमुहन्न प्रेत्य संज्ञास्ति' इति
स्वयमेव श्रुत्यार्थान्तरस्य दर्शितत्वात्—'न वा अरेऽहं मोहं
विनाशी वा अरेऽयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भव
एतदुक्तं भवति—कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्य
सङ्गोऽस्ति । मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिरविद्याकृता

१ मोहं मोहकरं वाक्यम् । २ उच्छित्तिर्नाशस्तद्धर्मा भवतीत्यनुच्छित्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ख्यया भवति । संसर्गाभावे च तत्कृतस्य विशेषविज्ञानस्याभावान्न
स्य संज्ञास्तीत्युक्तमिति । यदप्युक्तम्—'विज्ञातारमरे केन विजानीयात्'
ते कर्तृवचनेन शब्देनोपसंहाराद्विज्ञानात्मन एवेदं द्रष्टव्यमिति,
दपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयम् । अपिच 'यत्र हि द्वैतमिव
वति तदितर इतरं पश्यति' (बृ० २।४।१३) इत्यारभ्याविद्यावि-
ये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपञ्च्य 'यत्र त्वस्य सर्वमा-
वाभूत्तत्केन कं पश्येत्' इत्यादिना विद्याविषये तस्यैव दर्शनादि-
णस्य विशेषविज्ञानस्याभावमभिदधाति । पुनश्च विषयाभावेऽपि
त्मानं विजानीयात् इत्याशङ्क्य 'विज्ञातारमरे केन विजानीयात्'
आह । ततश्च विशेषविज्ञानाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधा-
व केवलः सन्भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति गम्यते ।
र्शितं तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् । अतश्च विज्ञाना-
परमात्मनोरविद्याप्रत्युपस्थापितनामरूपरचितदेहाद्युपाधिनिमित्तो भेदो
पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदान्तवादिभिरभ्युपगन्तव्यः । 'सदेव
म्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१) 'आत्मैवेदं सर्वम्'
(छा० ७।२५।२), 'ब्रह्मैवेदं सर्वम्' (मुण्ड० २।२।११), 'इदं सर्वं यदय-
त्मा,' (बृ० २।४।६), 'नान्योऽतोऽस्ति द्रष्टा' (बृ० ३।७।२३), 'नान्यदतो-
स्ति द्रष्टृ' (बृ० ३।८।११) इत्येवंरूपाभ्यः श्रुतिभ्यः । स्मृतिभ्यश्च 'वासुदेवः
सर्वमिति' (गी० ७।१९), 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'
(गी० १३।२), 'समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्' (गी०
१३।२७) इत्येवंरूपाभ्यः । भेददर्शनापवादाच्च 'अन्योऽसावन्योऽहम-
ति न स वेद यथा पशुः' (बृ० १।४।१०), 'मृत्योः स मृत्युमा-
ति य इह नानेव पश्यति' (बृ० ४।४।१९) इत्येवंजातीयकात् ।
वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ० ४।४।२५)
चात्मनि सर्वविक्रियाप्रतिषेधात् । अन्यथा च मुमुक्षूणां निरप-
विज्ञानानुपपत्तेः, सुनिश्चितार्थत्वानुपपत्तेश्च । निरपवादं हि विज्ञानं
काङ्क्षानिवर्तकमात्मविषयमिष्यते, 'वेदान्तविज्ञानसुनिश्चितार्थाः' (मु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ण्ड० ३।२।६ ) इति च श्रुतेः । 'तत्र को मोहः कः शोक ए...
मनुपश्यतः' ( ईशा० ७ ) इति च । स्थितप्रज्ञलक्षणस्मृतेश्च (गी...
२।५४ ) । स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने ...
परमात्मेति नाममात्रभेदात्, क्षेत्रज्ञोऽयं परमात्मनो भिन्नः ...
क्षेत्रज्ञाद्भिन्न इत्येवंजातीयक आत्मभेदविषयो निर्वन्धो नि...
एको ह्ययमात्मा नाममात्रभेदेन बहुधाभिधीयत इति । न...
ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायाम्' (तै० २।१ ...
कांचिदेवैकां[1] गुहामधिकृत्यैतदुक्तम् । नच ब्रह्मणोऽन्यो गुहा...
तोऽस्ति, 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै० २।६ ) इति स्र...
शश्रवणात् । ये[2] तु निर्वन्धं कुर्वन्ति ते वेदान्तार्थं बाधमानाः ...
सम्यग्दर्शनमेव बाधन्ते । कृतकमनित्यं च मोक्षं कल्पयन्ति ...
च न संगच्छन्त इति ॥ २२ ॥

## ७ प्रकृत्यधिकरणम् । सू० २३-२७

### प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २३ ॥

यथाभ्युदयहेतुत्वाद्धर्मो जिज्ञास्य एवं निःश्रेयसहेतुत्वाद्ब्रह्म...
स्यमित्युक्तम् । ब्रह्म च 'जन्माद्यस्य यतः' (ब्र० १।१...
लक्षितम् । तच्च लक्षणं घटरुचकादीनां मृत्सुवर्णादिवत्प्रकृति...
लसुवर्णकारादिवन्निमित्तत्वे च समानमित्यतो भवति विमर्शः ...
त्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति । तत्र निमित्तकारणमेव ...
वलं स्यादिति प्रतिभादिति । कस्मात् । ईक्षापूर्वककर्तृत्वश्रवणात् ...
पूर्वकं हि ब्रह्मणः कर्तृत्वमवगम्यते—'स ईक्षांचक्रे' (प्र० ...
प्राणमसृजत' (प्र० ६।४ ) इत्यादिश्रुतिभ्यः । ईक्षापूर्वकं ...
निमित्तकारणेष्वेव कुलालादिषु दृष्टम् । अनेककारकपूर्विका ...
फलसिद्धिर्लोके दृष्टा । स च न्याय आदिकर्तर्यपि युक्तः सं...
ईश्वरत्वप्रसिद्धेश्च । ईश्वराणां हि राजवैवस्वतादीनां निमित्त...

१ कांचित् जीवस्थानादन्तम् । २ ये तु आत्मभेदप्रभृतयः । ३ ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चलं प्रतीयते तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुम् । र्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते, कारणेनापि तस्य तादृ-नैव भवितव्यं, कार्यकारणयोः सारूप्यदर्शनात् । ब्रह्म च नैवं-क्षणमवगम्यते 'निष्कलं[1] निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' श्वे० ६।१९) इत्यादिश्रुतिभ्यः । पारिशेष्याद्ब्रह्मणोऽन्यदुपादानकार-मशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगन्तव्यम् । ब्रह्मकारणत्वश्रुतेर्निमि-त्वमात्रे पर्यवसानादिति । एवं प्राप्ते ब्रूमः—प्रकृतिश्चोपादानकारणं ब्रह्माभ्युपगन्तव्यं निमित्तकारणं च । न केवलं निमित्तकारणमेव । स्यात् । प्रतिज्ञादृष्टान्तानुपरोधात् । एवं प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरु-ते । प्रतिज्ञा तावत्—'उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्य-मतमविज्ञातं विज्ञातम्' (छा० ६।१।२) इति । तत्र चैकेन विज्ञा-सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतीयते । तच्चोपादान-रणविज्ञाने सर्वविज्ञानं संभवत्युपादानकारणाव्यतिरेकात्कार्यस्य । मित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति, लोके तक्ष्णः प्रासादव्यतिरे-दर्शनात् । दृष्टान्तोऽपि—'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं ज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इत्युपा-नकारणगोचर एवाम्नायते । तथा 'एकेन लोहमणिना[2] सर्वं लोहमयं ज्ञातं स्यात्' 'एकेन नखनिकृन्तनेन[3] सर्वं कार्ष्णायसं विज्ञातं स्यात्' छा० ६।१।४,५,६) इति च । तथान्यत्रापि 'कस्मिन्नु भगवो विज्ञाते र्वमिदं विज्ञातं भवति' (मुण्ड० १।१।२) इति प्रतिज्ञा । 'यथा पृ-व्यामोषधयः संभवन्ति' (मुण्ड० १।१।७) इति दृष्टान्तः । तथा ात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' इति प्रतिज्ञा । यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्शब्दाञ्शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः' (बृ० ४।५।६,८) इति

---

१ निष्कलं निरवयवम्, निष्क्रियमचलम्, शान्तमपरिणामि, निरवद्यं निरस्तसमस्तदो-षम् । २ लोहं सुवर्णम् । ३ नखनिकृन्तनं कार्ष्णायसकृतनखलवनशस्त्रं लोहपिण्डो वा । दुन्दुभ्याघातस्य जनकस्य जन्यतया संबन्धी वा शब्दो विशेषशब्द इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टान्तः । एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्व प्रत्येतव्यौ । यत इतीयं पञ्चमी 'यतो वा इमानि भूतानि' इत्यत्र 'जनिकर्तुः प्रकृतिः' (पा० सू० १।४।३०) इति विशेषे त्प्रकृतिलक्षण एवापादाने द्रष्टव्या । निमित्तत्वं त्वधिष्ठात्रन्तरा धिगन्तव्यम् । यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलाल र्णकारादीनधिष्ठातृनपेक्ष्य प्रवर्तते नैवं ब्रह्मण उपादानकारणस्य सतो ऽधिष्ठात्रपेक्ष्योऽस्ति, प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणात् । अधि ष्ठात्रन्तराभावोऽपि प्रतिज्ञादृष्टान्तानुपरोधादेवोदितो वेदितव्यः । अधि ष्ठातरि ह्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्व नस्यासंभवात्प्रतिज्ञादृष्टान्तोपरोध एव स्यात् । तस्मादधिष्ठात्रन्तरा वादात्मनः कर्तृत्वमुपादानान्तराभावाच्च प्रकृतित्वम् ॥ २३ ॥

कुतश्चात्मनः कर्तृत्वप्रकृतित्वे—

## अभिध्योपदेशाच्च ॥ २४ ॥

अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति 'सोऽकामयत बहु स्यां प्रजायेयेति', 'तदैक्षत बहु स्यां प्रजायेय' इति च । तत्राभिध्या पूर्विकायाः स्वातन्त्र्यप्रवृत्ते कर्तेति गम्यते । बहु स्यामिति प्रत्यगात्म विषयत्वाद्बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

प्रकृतित्वस्यायमभ्युच्चयः । इतश्च प्रकृतिर्ब्रह्म, यत्कारणं साक्षा कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते—'सर्वाणि ह वा इमानि भूता न्याकाशादेव समुत्पद्यन्ते । आकाशं प्रत्यस्तं यन्ति' (छा० १।९।१) इति । यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धं यथा व्रीहियवादीनां पृथिवी । साक्षादिति चोपादानान्तरानुपादानं दर्श यत्याकाशादेवेति । प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः ।

## आत्मकृतेः परिणामात् ॥ २६ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्मप्रक्रियायाम् 'तदात्मानं स्वयम

१ अभिध्या सृष्टिसंकल्पः । २ अभ्युच्चयो हेत्वन्तरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुरुत' (तै० २।७) इत्यात्मनः कर्मत्वं कर्तृत्वं च दर्शयति । आत्मा-
नमिति कर्मत्वं, स्वयमकुरुतेति कर्तृत्वम् । कथं पुनः पूर्वसिद्धस्य सतः
कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुम् । परिणामादिति
ब्रूमः । पूर्वसिद्धोऽपि हि सन्नात्मा विशेषेण विकारात्मना परिणमया-
मासात्मानमिति । विकारात्मना च परिणामो मृदाद्यासु प्रकृतिषूप-
लब्धः । स्वयमिति च विशेषणान्निमित्तान्तरानपेक्षत्वमपि प्रतीयते ।
परिणामादिति वा पृथक्सूत्रम् । तस्यैषोऽर्थः—इतश्च प्रकृतिर्ब्रह्म,
यत्कारणं ब्रह्मण एव विकारात्मनां परिणामः सामानाधिकरण्येनाम्ना-
यते 'सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च' (तै० २।६)
इत्यादिनेति ॥ २६ ॥

## योनिश्च हि गीयते ॥ २७ ॥

इतश्च प्रकृतिर्ब्रह्म, यत्कारणं ब्रह्म योनिरित्यपि पठ्यते वेदान्तेषु 'कर्तार-
मीशं पुरुषं ब्रह्म योनिम्' (मुण्ड० ३।१।३) इति, 'यद्भूतयोनिं परिपश्यन्ति
धीराः' (मुण्ड० १।१।६) इति च । योनिशब्दश्च प्रकृतिवचनः सम-
धिगतो लोके 'पृथिवी योनिरोषधिवनस्पतीनाम्' इति । स्त्रीयोनेरप्य-
स्त्येवावयवद्वारेण गर्भं प्रत्युपादानकारणत्वम् । क्वचित्स्थानवचनोऽपि
योनिशब्दो दृष्टः—'योनिष्ट इन्द्र निषदे अकारि' (ऋ० सं० १।१०४।१)
इति । वाक्यशेषात्त्वत्र प्रकृतिवचनता परिगृह्यते 'यथोर्णनाभिः सृजते
गृह्णते च' (मु० १।१।७) इत्येवंजातीयकात् । एवं प्रकृतित्वं ब्रह्मणः
प्रसिद्धम् । यत्पुनरिदमुक्तमीक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलाला-
दिषु लोके दृष्टं नोपादानेष्वित्यादि, तत्प्रत्युच्यते—न लोकवदिह भवि-
तव्यम् । नह्ययमनुमानगम्योऽर्थः । शब्दगम्यत्वात्त्वस्यार्थस्य यथाश-

१ सत् प्रत्यक्षं भूतत्रयम्, त्यत् परोक्षं भूतद्वयम्, निरुक्तं वक्तुं शक्यं घटादि, अनि-
रुक्तं वक्तुमशक्यं कपोतरूपादिकम् । २ कर्तारं क्रियाशक्तिमन्तम्, ईशं नियन्तारम्,
पुरुषं प्रत्यञ्चम्, ब्रह्म पूर्णम्, योनिं प्रकृतिम् । ३ हे इन्द्र, ते तव निषदे उपवेशनाय
योनिः स्थानं मया अकारि कृतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्दमिह भवितव्यम् । शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रति...
वोचाम । पुनश्चैतत्सर्वं विस्तरेण प्रतिवक्ष्यामः ॥ २७ ॥

## ८ सर्वव्याख्यानाधिकरणम् । सू० २८

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥**

'ईक्षतेर्नाशब्दम्' ( ब्र० सू० १।१।५ ) इत्यारभ्य प्रधान... सूत्रैरेव पुनः पुनराशङ्क्य निराकृतः, तस्य हि पक्षस्योपोद्बलकानि ... चिल्लिङ्गाभासानि वेदान्तेष्वापातेन मन्दमतीन्प्रतिभान्तीति । ... कार्यकारणानन्यत्वाभ्युपगमात्प्रत्यासन्नो वेदान्तवादस्य । देव... मिश्च कैश्चिद्धर्मसूत्रकारैः स्वग्रन्थेष्वाश्रितः, तेन तत्प्रतिषेधे ... कृतो नाण्वादिकारणवादप्रतिषेधे । तेऽपि तु ब्रह्मकारणवादप... पक्षत्वात्प्रतिषेद्धव्याः । तेषामप्युपोद्बलकं वैदिकं किंचिल्लि... मन्दमतीन्प्रति भायादिति । अतः प्रधानमल्लनिबर्हणन्यायेनाति... एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारण... प्रतिषिद्धतया व्याख्याता वेदितव्याः । तेषामपि प्रधानव... च्छब्दविरोधित्वाच्चेति । व्याख्याता व्याख्याता इति पदाभ्या... यपरिसमाप्तिं द्योतयति ॥ २८ ॥ इति श्रीमत्परमहंसपरि... यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये प्रथ... चतुर्थः पादः समाप्तः ॥ ४ ॥

इति श्रीमद्ब्रह्मसूत्रशाङ्करभाष्ये समन्वयाख्यः प्रथमोऽध्यायः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वितीयोऽध्यायः ।

[द्वितीये अविरोधाख्याध्याये प्रथमपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्ततर्कैश्च वेदान्तसमन्वयविरोधपरिहारः]

## १ स्मृत्यधिकरणम् । सू० १—२

प्रथमेऽध्याये सर्वज्ञः सर्वेश्वरो जगत उत्पत्तिकारणं, मृत्सुवर्णादय घटरुचकादीनाम् । उत्पन्नस्य जगतो नियन्तृत्वेन स्थितिकारणं, यावीव मायायाः । प्रसारितस्य च जगतः पुनः स्वात्मन्येवोपसंहार-कारणं, अवनिरिव चतुर्विधस्य भूतग्रामस्य । स एव च सर्वेषां न आत्मेत्येतद्वेदान्तवाक्यसमन्वयप्रतिपादनेन प्रतिपादितम् । प्रधानादिकार-वादाश्चाशब्दत्वेन निराकृताः । इदानीं स्वपक्षे स्मृतिन्यायविरोधपरि-हारः, प्रधानादिवादानां च न्यायाभासोपबृंहितत्वं, प्रतिवेदान्तं च सृ-ष्ट्यादिप्रक्रियाया अविगीतत्वमित्यस्यार्थजातस्य प्रतिपादनाय द्वितीयो-ऽध्याय आरभ्यते । तत्र प्रथमं तावत्स्मृतिविरोधमुपन्यस्य परिहरति—

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्य-नवकाशदोषप्रसङ्गात् ॥ १ ॥**

यदुक्तं ब्रह्मैव सर्वज्ञं जगतः कारणमिति, तदयुक्तम् । कुतः स्मृत्यनवका-शदोषप्रसङ्गात् । स्मृतिश्च तन्त्राख्या परमर्षिप्रणीता शिष्टपरिगृहीता, अन्याश्च तदनुसारिण्यः स्मृतयः, एवं सत्यनवकाशाः प्रसज्येरन् । तासु अचेतनं प्रधानं स्वतन्त्रं जगतः कारणमुपनिबध्यते । मन्वादिस्मृतयस्ता-श्चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्पयन्त्यः साव-काशा भवन्ति । अस्य वर्णस्यास्मिन्कालेऽनेन विधानेनोपनयनं, ईदृश-आचारः, इत्थं वेदाध्ययनं, इत्थं समावर्तनं, इत्थं सहधर्मचारिणीसंयोग इति । तथा पुरुषार्थांश्च वर्णाश्रमधर्मान्नानाविधान्विदधति । नैवं कपि-

---

१ 'द्वितीये स्मृतितर्काभ्यामविरोधोऽन्यदुष्टता । भूतभोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता' संग्रहश्लोकः । २ परमर्षिः कपिलः । ३ अन्या आसुरिपञ्चशिखादिप्रणीताः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वादिस्मृतीनामनुप्रेये विषयेऽवकाशोऽस्ति। मोक्षसाधनमेव हि स्य
र्शनमधिकृत्य ताः प्रणीताः। यदि तत्राप्यनवकाशाः स्युरानर्थक्य
प्रसज्येत। तस्मात्तदविरोधेन वेदान्ता व्याख्यातव्याः। कथं पुन
त्वादिभ्यो हेतुभ्यो ब्रह्मैव सर्वज्ञं जगतः कारणमित्यवधारितः ग
स्मृत्यनवकाशदोषप्रसङ्गेन पुनराक्षिप्यते। भवेदयमनाक्षेपः स्व
नाम्। परतन्त्रप्रज्ञास्तु प्रायेण जनाः स्वातन्त्र्येण श्रुत्यर्थमवधा
शक्नुवन्तः प्रख्यातप्रणेतृकासु स्मृतिष्ववलम्बेरन्। तद्बलेन श्रु
प्रतिपित्सेरन्। अस्मत्कृते च व्याख्याने न विश्वस्युर्बहुमानात्
प्रणेतृषु। कपिलप्रभृतीनां चार्षं ज्ञानमप्रतिहतं स्मर्यते। श्रुतिश्च
'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' (
५।२) इति। तस्मान्नैषां मतमयथार्थं शक्यं संभावयितुम्।
ष्टम्भेन चैतेऽर्थं प्रतिष्ठापयन्ति। तस्मादपि स्मृतिबलेन वेदान्ता
इति पुनराक्षेपः। तस्य समाधिः नान्यस्मृत्यनवकाशदोषप्रसङ्गा
यदि स्मृत्यनवकाशदोषप्रसङ्गेनेश्वरकारणवाद आक्षिप्येत, ए
ईश्वरकारणवादिन्यः स्मृतयोऽनवकाशाः प्रसज्येरन्। ता
ष्यामः—'यत्तत्सूक्ष्ममविज्ञेयम्' इति परं ब्रह्म प्रकृत्य 'स
भूतानां क्षेत्रज्ञश्चेति कथ्यते' इति चोक्त्वा 'तस्मादव्यक्तमुत्
द्विजसत्तम' इत्याह। तथान्यत्रापि 'अव्यक्तं पुरुषे ब्रह्मन्
लीयते' इत्याह। 'अतश्च संक्षेपमिमं शृणुध्वं नारायणः सर्वमि
स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः॥' इ
भगवद्गीतासु च—'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्त
गी० ७।६) इति। परमात्मानमेव च प्रकृत्यापस्तम्बः
'तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः' (
१।८।२३।२) इति। एवमनेकशः स्मृतिष्वपीश्वरः कारणत्वे
त्वेन च प्रकाश्यते। स्मृतिबलेन प्रत्यवतिष्ठमानस्य स्मृति

१ उपचरितं श्रुत्यर्थं प्रतिपद्येरन्नित्यर्थः। २ सूक्ष्मत्वमतीन्द्रियत्वम्। अ
[illegible]। ३ [illegible]। शाश्वतिकः कूटस्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यामीत्यतोऽयमन्यस्मृत्यनवकाशदोषोपन्यासः । दर्शितं तु श्रुतीनामीश्वरकारणवादं प्रति तात्पर्यम् । विप्रतिपत्तौ च स्मृतीनामवश्यकर्तव्येऽन्यतरपरिग्रहेऽन्यतरपरित्यागे च श्रुत्यनुसारिण्यः स्मृतयः प्रमाणमनपेक्ष्या इतराः । तदुक्तं प्रमाणलक्षणे—'विरोधे[1] त्वनपेक्षं स्यादसति ह्यनुमानम्' (जै० सू० १।३।३) इति । नचातीन्द्रियार्थान्श्रुतिमन्तरेण कश्चिदुपलभत इति शक्यं संभावयितुं निमित्ताभावात् । शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेत् । न । सिद्धेरपि सापेक्षत्वात् । धर्मानुष्ठानापेक्षा हि सिद्धिः । स च धर्मश्चोदनालक्षणः । ततश्च पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनवशेनातिशङ्कितुं शक्यते । सिद्धव्यपाश्रयकल्पनायामपि बहुत्वात्सिद्धानां प्रदर्शितेन प्रकारेण स्मृतिविप्रतिपत्तौ सत्यां न श्रुतिव्यपाश्रयादन्यन्निर्णयकारणमस्ति । परतन्त्रप्रज्ञस्यापि नाकस्मात्स्मृतिविशेषविषयः पक्षपातो युक्तः । कस्यचित्क्वचित्पक्षपाते सति पुरुषमतिवैश्वरूप्येण तत्त्वाव्यवस्थानप्रसङ्गात् । तस्मात्तस्यापि स्मृतिविप्रतिपत्त्युपन्यासेन श्रुत्यनुसारानुसारविषयविवेचनेन च सन्मार्गे प्रज्ञा संग्रहणीया । या तु श्रुतिः कपिलस्य ज्ञानातिशयं प्रदर्शयन्ती प्रदर्शिता न तया श्रुतिविरुद्धमपि कापिलं मतं श्रद्धातुं शक्यं, कापिलमिति श्रुतिसामान्यमात्रत्वात् । अन्यस्य च कपिलस्य सगरपुत्राणां प्रतप्तुर्[2]वासुदेवनाम्नः स्मरणात् । अन्यार्थदर्शनस्य च प्राप्तिरहितस्यासाधकत्वात् । भवति चान्या मनोर्माहात्म्यं प्रख्यापयन्ती श्रुतिः—'यद्वै किंच मनुरवदत्तद्भेषजम्' (तै० सं० २।२।१०।२) इति । मनुना च 'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । संपश्यन्नात्मयाजी वै स्वाराज्यमधिगच्छति ॥' (१२।९१) इति सर्वात्मत्वदर्शनं प्रशंसता कापिलं मतं निन्द्यत इति गम्यते । कपिलो हि न सर्वात्मत्वदर्शनमनुमन्यते, आत्मभेदाभ्युपगमात् । महाभारतेऽपि च 'बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु' इति विचार्य

१ श्रुतिविरोधे स्मृतिप्रामाण्यं अनपेक्षं हेयम् । हि यतोऽसति विरोधे श्रुत्यनुमानं
...जै । २ प्रतप्तुर्दाहकस्य ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'बहवः पुरुषा राजन्सांख्ययोगविचारिणाम्' इति परपक्षमुपन्यस्य तदि
दासेन—'बहूनां पुरुषाणां हि यथैका योनिरुच्यते । तथा तं नि
विश्वमाख्यास्यामि गुणाधिकम् ॥' इत्युपक्रम्य 'ममान्तरात्मा तव च ये
ये चान्ये देहसंस्थिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचि
चित् ॥ विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति
स्वैरचारी यथासुखम् ॥' इति सर्वात्मतैव निर्धारिता । श्रुतिश्च
तायां भवति—'यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को
मोहः कः शोक एकत्वमनुपश्यतः' (ई० ७) इत्येवंविधा । अतश्च
सिद्धमात्मभेदकल्पनयापि कपिलस्य तन्त्रं वेदविरुद्धं वेदानुसारि
नविरुद्धं च, न केवलं स्वतन्त्रप्रकृतिकल्पनयैवेति । वेदस्य हि
स्वार्थे प्रामाण्यं रवेरिव रूपविषये । पुरुषवचसां तु मूलान्तरापे
स्मृतिव्यवहितं चेति विप्रकर्षः । तस्माद्वेदविरुद्धे विषये स्मृत्य
प्रसङ्गो न दोषः ॥ १ ॥

कुतश्च स्मृत्यनवकाशप्रसङ्गो न दोषः—

## इतरेषां चानुपलब्धेः ॥ २ ॥

प्रधानादितराणि यानि प्रधानपरिणामत्वेन स्मृतौ कल्पि
दादीनि न तानि वेदे लोके वोपलभ्यन्ते । भूतेन्द्रियाणि ता
सिद्धत्वाच्छक्यन्ते स्मर्तुम् । अलोकवेदप्रसिद्धत्वात्तु महदादी
न्द्रियार्थस्य न स्मृतिरवकल्पते । यदपि क्वचित्तत्परमिव
सते तदप्यतत्परं व्याख्यातम् 'आनुमानिकमप्येकेषाम्' (ब्र०
इत्यत्र । कार्यस्मृतेरप्रामाण्यात्कारणस्मृतेरप्यप्रामाण्यं युक्तमि
तस्मादपि न स्मृत्यनवकाशप्रसङ्गो दोषः । तर्कावष्टम्भं तु
त्वात्' (ब्र० २।१।४) इत्यारभ्योन्मथिष्यति ॥ २ ॥

## २ योगप्रत्युक्त्यधिकरणम् । सू० ३

## एतेन योगः प्रत्युक्तः ॥ ३ ॥

एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृतिरपि प्रत्याख्याता

[illegible] विश्वभुजादी

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिदिशति । तत्रापि श्रुतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं, महदा-
नीनि च कार्याण्यलोकवेदप्रसिद्धानि कल्प्यन्ते । नन्वेवं सति समान-
यायत्वात्पूर्वेणैवैतद्गतं किमर्थं पुनरतिदिश्यते । अस्ति ह्यत्राभ्यधिका-
ङ्का । सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः 'श्रोतव्यो मन्तव्यो
दिध्यासितव्यः' (बृ० २।४।५) इति । 'त्र्युन्नतं[1] स्थाप्य समं शरी-
रम्' (श्वे० २।८) इत्यादिना चासनादिकल्पनापुरःसरं बहुप्रपञ्चं
गविधानं श्वेताश्वतरोपनिषदि दृश्यते । लिङ्गानि च वैदिकानि योगवि-
याणि सहस्रश उपलभ्यन्ते 'तां योगमिति मन्यन्ते स्थिरामिन्द्रियधार-
णाम्' (का० २।६।११) इति 'विद्यामेतां योगविधिं च कृत्स्नम्'
का० २।६।१८) इति चैवमादीनि । योगशास्त्रेऽपि 'अथ तत्त्वदर्शे-
पायो योगः' इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते । अतः
प्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भविष्य-
ति । इयमप्यधिकाशङ्काऽतिदेशेन निवर्त्यते । अर्थैकदेशसंप्रतिपत्ता-
प्यर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात् । सतीष्वप्यध्यात्मविष-
सु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्योरेव निराकरणे यत्नः कृतः ।
ख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ, शिष्टैश्च परिगृ-
तौ, लिङ्गेन च श्रौतेनोपबृंहितौ । 'तत्कारणं सांख्ययोगाभिपन्नं
त्वा देवं मुच्यते सर्वपाशैः' (श्वे० ६।१३) इति । निराकरणं तु
सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यत इति ।
तेर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति 'तमेव
दित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे० ३।८) इति ।
तिनो हि ते सांख्या योगाश्च नात्मैकत्वदर्शिनः । यत्तु दर्शनमुक्तं
कारणं सांख्ययोगाभिपन्नम्' इति, वैदिकमेव तत्र ज्ञानं ध्यानं च
ख्ययोगशब्दाभ्यामभिलप्यते प्रत्यासत्तेरित्यवगन्तव्यम् । येन त्वंशेन
विरुध्येते तेनेष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम् । तद्यथा—
सङ्गो ह्ययं पुरुषः' (बृ० ४।३।१६) इत्येवमादिश्रुतिप्रसिद्धमेव

१ त्रीणि उरोग्रीवशिरांस्युन्नतानि यस्मिञ्शरीरे तत्त्र्युन्नतम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरभ्युपगम्यते
योगैरपि 'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः' (जावा०
वमादि श्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते
सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि । तान्यपि तर्कोपपत्ति
ज्ञानायोपकुर्वन्तीति चेदुपकुर्वन्तु नाम । तत्त्वज्ञानं तु वेदान्त
एव भवति 'नावेदविन्मनुते तं बृहन्तम्' (तै० ब्रा० ३
'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ० ३।९।२६) इत्या
तिभ्यः ॥ ३ ॥

## ३ विलक्षणत्वाधिकरणम् । सू० ४—१२

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥

ब्रह्मास्य जगतो निमित्तकारणं प्रकृतिश्चेत्यस्य पक्षस्याक्षेपः
मित्तः परिहृतः । तर्कनिमित्त इदानीमाक्षेपः परिह्रियते ।
स्मिन्नवधारित आगमार्थे तर्कनिमित्तस्याक्षेपस्यावकाशः ।
ब्रह्मण्यप्यनपेक्ष आगमो भवितुमर्हति । भवेदयमवष्टम्भो
न्तरानवगाह्य आगममात्रप्रमेयोऽयमर्थः स्यादनुष्ठेयरूप इव
निष्पन्नरूपं तु ब्रह्मावगम्यते । परिनिष्पन्ने च वस्तुनि प्रमाणा
स्त्यवकाशो यथा पृथिव्यादिषु । यथा च श्रुतीनां परस्परविरो
वशेनेतरा नीयन्ते, एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव
दृष्टसाम्येन चादृष्टमर्थं समर्थयन्ती युक्तिरनुभवस्य संनिकृष्यते
ष्यते तु श्रुतिरैतिह्यमात्रेण स्वार्थाभिधानात् । अनुभवावसानं
ज्ञानमविद्याया निवर्तकं मोक्षसाधनं च दृष्टफलतयेष्यते ।
'श्रोतव्यो मन्तव्यः' इति श्रवणव्यतिरेकेण मननं विदधती
दर्तव्यं दर्शयति । अतस्तर्कनिमित्तः पुनराक्षेपः क्रियते 'न वि
दस्य' इति । यदुक्तं चेतनं ब्रह्म जगतः कारणं प्रकृतिरिति

१ तर्कोऽनुमानमनुग्राह्यं मानम् । उपपत्तिरनुग्राहिका युक्तिरिति भेदः ।
दृष्टान्तः । २ ऐतिह्यमनेन प्रोक्तमिति यावत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कस्मात् । विलक्षणत्वादस्य विकारस्य प्रकृत्याः । इदं हि ब्रह्मकार्यत्वेनाभिप्रेयमाणं जगत् ब्रह्मविलक्षणमचेतनमशुद्धं च दृश्यते । ब्रह्म च जगद्विलक्षणं चेतनं शुद्धं च श्रूयते । नच विलक्षणत्वे प्रकृतिविकारभावो दृष्टः । नहि रुचकादयो विकारा मृत्प्रकृतिका भवन्ति शरावादयो वा सुवर्णप्रकृतिकाः । मृदैव तु मृदन्विता विकाराः क्रियन्ते सुवर्णेन च सुवर्णान्विताः । तथेदमपि जगदचेतनं सुखदुःखमोहान्वितं सदचेतनस्यैव सुखदुःखमोहात्मकस्य कारणस्य कार्यं भवितुमर्हतीति न विलक्षणस्य ब्रह्मणः । ब्रह्मविलक्षणत्वं चास्य जगतोऽशुद्ध्यचेतनत्वदर्शनादवगन्तव्यम् । अशुद्धं हि जगत्सुखदुःखमोहात्मकतया प्रीतिपरितापविषादादिहेतुत्वात्स्वर्गनरकाद्युच्चावचप्रपञ्चत्वाच्च । अचेतनं चेदं जगच्चेतनं प्रति कार्यकारणभावेनोपकरणभावोपगमात् । नहि साम्ये सत्युपकार्योपकारकभावो भवति । नहि प्रदीपौ परस्परस्योपकुरुतः । ननु चेतनमपि कार्यकारणं स्वामिभृत्यन्यायेन भोक्तुरुपकरिष्यति । न । स्वामिभृत्ययोरप्यचेतनांशस्यैव चेतनं प्रत्युपकारकत्वात् । यो ह्येकस्य चेतनस्य परिग्रहो बुद्ध्यादिरचेतनभागः स एवान्यस्य चेतनस्योपकरोति नतु स्वयमेव चेतनश्चेतनान्तरस्योपकरोत्यपकरोति वा । निरतिशया ह्यकर्तारश्चेतना इति सांख्या मन्यन्ते । तस्मादचेतनं कार्यकारणम् । नच काष्ठलोष्टादीनां चेतनत्वे किंचित्प्रमाणमस्ति । प्रसिद्धश्चायं चेतनाचेतनविभागो लोके । तस्माद्ब्रह्मविलक्षणत्वान्नेदं जगत्तत्प्रकृतिकम् । योऽपि कश्चिदाचक्षीत श्रुत्वा जगतश्चेतनप्रकृतिकतां तद्बलेनैव समस्तं जगच्चेतनमवगमयिष्यामि । प्रकृतिरूपस्य विकारेऽन्वयदर्शनात् । अविभावनं तु चैतन्यस्य परिणामविशेषाद्भविष्यति । यथा स्पष्टचैतन्यानामप्यात्मनां स्वापमूर्च्छाद्यवस्थासु चैतन्यं न विभाव्यत एवं काष्ठलोष्टादीनामपि चैतन्यं न विभावयिष्यते । एतस्मादेव च विभावितविभावितत्वकृताद्विशेषाद्रूपादिभावाभावाभ्यां च कार्यकारणानामात्मनां च चेतनत्वाविशेषेऽपि गुणप्रधानभावो न विरोत्स्यते । यथा च पार्थिवत्वाविशेषेऽपि मांससूपौदनादीनां प्रत्यात्मवर्तिनो विशेषात्परस्परोपकारित्वं

१ सुखदुःखमोहाः सत्त्वरजस्तमांसि । २ उपजनापायधर्मयोगोऽतिशयस्तदभावो निरतिशयत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भवत्येवमिहापि भविष्यति । प्रविभागप्रसिद्धिरप्यत एव न
इति । तेनापि कथंचिच्चेतनाचेतनत्वलक्षणं विलक्षणत्वं परिह्रि
द्धशुद्धित्वलक्षणं तु विलक्षणत्वं नैव परिह्रियते । नचेतरदपि
णत्वं परिहर्तुं शक्यत इत्याह—तथात्वं च शब्दादिति । अनव
मेव हीदं लोके समस्तस्य वस्तुनश्चेतनत्वं चेतनप्रकृतिकत्व
शरणतया केवलयोत्प्रेक्षेत, तच्च शब्देनैव विरुध्यते । यतः
तथात्वमवगम्यते । तथात्वमिति प्रकृतिविलक्षणत्वं कथयति ।
'विज्ञानं चाविज्ञानं च' (तै० २।६) इति कस्यचिद्विभाग
श्रावयंश्चेतनाद्ब्रह्मणो विलक्षणमचेतनं जगच्छ्रावयति ॥ ४ ॥

ननु चेतनत्वमपि क्वचिदचेतनत्वाभिमतानां भूतेन्द्रियाणां
यथा 'मृदब्रवीत्' 'आपोऽब्रुवन्' ( श० प० ब्रा० ६।१।३।२
'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त' (छा० ६।२।३,४) इति चैव
विषया चेतनत्वश्रुतिः । इन्द्रियविषयाणि 'ते हेमे प्राणा अहंश्रे
माना ब्रह्म जग्मुः' (बृ० ६।१।७) इति, 'ते ह वाचमूचुस्त्वं न
(बृ० १।३।२ ) इत्येवमाद्येन्द्रियविषयेति । अत उत्तरं पठति—

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥

तुशब्द आशङ्कामपनुदति । न खलु मृदब्रवीदित्येवंजातीय
भूतेन्द्रियाणां चेतनत्वमाशङ्कनीयम् । यतोऽभिमानिव्यपदेश
मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदन
चेतनोचितेषु व्यवहारेषु व्यपदिश्यन्ते न भूतेन्द्रियमात्रम् ।
विशेषानुगतिभ्याम् । विशेषो हि भोक्तॄणां भूतेन्द्रियाणां च
नप्रविभागलक्षणः प्रागभिहितः । सर्वचेतनतायां चासौ
अपिच कौषीतकिनः प्राणसंवादे करणमात्राशङ्काविनिवृत्तये
तनपरिग्रहाय देवताशब्देन विशिंषन्ति—'एता ह वै देवता

१ इतरश्चेतनाचेतनस्वरूपम् । २ संवदनं विवादः । ३ विशिंषन्ति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवदमानाः' इति । ता वा एताः सर्वा देवताः प्राणे निःश्रेयसं विदित्वा' (२।१४) इति च । अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मन्त्रार्थवादेतिहासपुराणादिभ्योऽवगम्यन्ते । 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' (ऐ० आ० २।४।२।४) इत्येवमादिका च श्रुतिः करणेष्वनुग्राहिकां देवतामनुगतां दर्शयति । प्राणसंवादवाक्यशेषे च 'ते ह प्राणाः प्रजापतिं पितरमेत्योचुः' (छा० ५।१।७) इति श्रेष्ठत्वनिर्धारणाय प्रजापतिगमनं, तद्वचनाच्चैकैकोत्क्रमणेनान्वयव्यतिरेकाभ्यां प्राणश्रैष्ठ्यप्रतिपत्तिः । 'तस्मै बलिहरणम्' (बृ० ६।१।१३) इति चैवंजातीयकोऽस्मदादिष्विव व्यवहारोऽनुगम्यमानोऽभिमानिव्यपदेशं द्रढयति । 'तत्तेज ऐक्षत' इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम् । तस्माद्विलक्षणमेवेदं ब्रह्मणो जगत् । विलक्षणत्वाच्च न ब्रह्मप्रकृतिकमित्याक्षिप्ते प्रतिविधत्ते ॥ ५ ॥

## दृश्यते तु ॥ ६ ॥

तुशब्दः पक्षं व्यावर्तयति । यदुक्तं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति । नायमेकान्तः । दृश्यते हि लोके चेतनत्वेन प्रसिद्धेभ्यः पुरुषादिभ्यो विलक्षणानां केशनखादीनामुत्पत्तिः, अचेतनत्वेन च प्रसिद्धेभ्यो गोमयादिभ्यो वृश्चिकादीनाम् । नन्वचेतनान्येव पुरुषादिशरीराण्यचेतनानां केशनखादीनां कारणानि, अचेतनान्येव च वृश्चिकादिशरीराण्यचेतनानां गोमयादीनां कार्याणीति । उच्यते—एवमपि किंचिदचेतनं चेतनस्यायतनभावमुपगच्छति किंचिन्नेत्यस्त्येव वैलक्षण्यम् । महांश्चायं पारिणामिकः स्वभावविप्रकर्षः पुरुषादीनां केशनखादीनां च स्वरूपादिभेदात् । तथा गोमयादीनां वृश्चिकादीनां च । अत्यन्तसारूप्ये च प्रकृतिविकारभाव एव प्रलीयेत । अथोच्येतास्ति कश्चित्पार्थिवत्वादिस्वभावः पुरुषादीनां केशनखादिष्वनुवर्तमानो गोमयादीनां वृश्चिकादिष्विति । ब्रह्मणोऽपि तर्हि सत्तालक्षणः स्वभाव आकाशादिष्वनुवर्तमानो

१ निःश्रेयसं श्रैष्ठ्यम् । २ पारिणामिकस्तत्तत्केशादिगतपरिणामात्मक इत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृश्यते । विलक्षणत्वेन च कारणेन ब्रह्मप्रकृतिकत्वं जगतो नाश्र
किमशेषस्य ब्रह्मस्वभावस्याननुवर्तनं विलक्षणत्वमभिप्रेयत उत य तत्
चिदथ चैतन्यस्येति वक्तव्यम् । प्रथमे विकल्पे समस्तप्रकृतिप्रप
च्छेदप्रसङ्गः । नह्यसत्यतिशये प्रकृतिविकार इति भवति । द्विती
चासिद्धत्वम् । दृश्यते हि सत्तालक्षणो ब्रह्मस्वभाव आकाशादिष्वनु
मान इत्युक्तम् । तृतीये तु दृष्टान्ताभावः । किं हि यच्चैतन्येन सम
तदब्रह्मप्रकृतिकं दृष्टमिति ब्रह्मवादिनं प्रत्युदाह्रियेत । समस्तस्य चे
तस्य ब्रह्मप्रकृतिकत्वाभ्युपगमात् । आगमविरोधस्तु प्रसिद्ध एव यो
ब्रह्म जगतः कारणं प्रकृतिश्चेत्यागमतात्पर्यस्य प्रसाधितत्वात् । म
परिनिष्पन्नत्वाद्ब्रह्मणि प्रमाणान्तराणि संभवेयुरिति । तदपि मनो
त्रम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षस्य गोचरः । लिङ्गाद्य
नानुमानादीनाम् । आगममात्रसमधिगम्य एव त्वयमर्थो
तथाच श्रुतिः—'नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञा
(का० १।२।९) इति । 'को अद्धा वेद क इह प्रवोचत्' । 'इ
ष्टिर्यत आबभूव' (ऋ० सं० १।३०।६) इति चैते ऋचौ सि
पीश्वराणां दुर्बोधतां जगत्कारणस्य दर्शयतः । स्मृतिरपि भवति
चिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्' इति । 'अव्यक्तो
चिन्त्योऽयमविकार्योऽयमुच्यते' (गी० २।२५) इति च । 'न मे
सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च स
(गी० १०।२) इति चैवंजातीयका । यदपि श्रवणव्यतिरेकेण
विदधच्छब्द एव तर्कमप्यादर्तव्यं दर्शयतीत्युक्तम् । नानेन मिषे
तर्कस्यात्रात्मलाभः संभवति । श्रुत्यनुगृहीत एव ह्यत्र तर्कोऽनु

१ एषा वेदान्तशास्त्रजन्या मतिस्तर्केण स्वमत्यूहमात्रेणापनेया बाधार्हा
तर्केण प्राप्तव्या नेत्यर्थः । किंतु अन्येन निपुणेनाचार्येण प्रोक्तप्रबोधिता
साक्षात्काराय भवति । हे प्रेष्ठ प्रियतम, इति नाचिकेतसंप्रति यमसंबोधनम् ।
सृष्टिराकाशादिसृष्टिः कुतः कस्माज्जाता कस्माच्च स्थितिं प्रापेत्यद्धा तत्त्वेन
कोऽपि । कः प्रवोचत्, न कोऽपि प्रवक्ताभूत् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाश्रीयते । स्वप्नान्तबुद्धान्तयोरुभयोरितरेतरव्यभिचारादात्मनोऽनन्वागतत्वं, संप्रसादे च प्रपञ्चपरित्यागेन सदात्मना संपत्तेर्निष्प्रपञ्चसदात्मत्वं, प्रपञ्चस्य ब्रह्मप्रभवत्वात्कार्यकारणानन्यत्वन्यायेन ब्रह्माव्यतिरेक इत्येवंजातीयकः । 'तर्काप्रतिष्ठानात्' (ब्र० २।१।११) इति च केवलस्य तर्कस्य विप्रलम्भकत्वं[1] दर्शयिष्यति । योऽपि चेतनकारणश्रवणबलेनैव समस्तस्य जगतश्चेतनतामुत्प्रेक्षेत तस्यापि 'विज्ञानं चाविज्ञानं च' इति चेतनाचेतनविभागश्रवणं विभावनाविभावनाभ्यां चैतन्यस्य शक्यत एव योजयितुम् । परस्यैव त्विदमपि विभागश्रवणं न युज्यते । कथम् । परमकारणस्य ह्यत्र समस्तजगदात्मना समवस्थानं श्राव्यते 'विज्ञानं चाविज्ञानं चाभवत्' इति । तत्र यथा चेतनस्याचेतनभावो नोपपद्यते विलक्षणत्वात्, एवमचेतनस्यापि चेतनभावो नोपपद्यते । प्रत्युक्तत्वात्तु विलक्षणत्वस्य यथाश्रुत्यैव चेतनं कारणं ग्रहीतव्यं भवति ॥ ६ ॥

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥

यदि चेतनं शुद्धं शब्दादिहीनं च ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य शब्दादिमतश्च कार्यस्य कारणमिष्येत असत्तर्हि कार्यं प्रागुत्पत्तेरिति प्रसज्येत । अनिष्टं चैतत्सत्कार्यवादिनस्तवेति चेत् । नैष दोषः । प्रतिषेधमात्रत्वात् । प्रतिषेधमात्रं हीदं नास्य प्रतिषेधस्य प्रतिषेध्यमस्ति । नह्ययं प्रतिषेधः प्रागुत्पत्तेः सत्त्वं कार्यस्य प्रतिषेद्धुं शक्नोति । कथम् । यथैव हीदानीमपीदं कार्यं कारणात्मना सदेवं प्रागुत्पत्तेरपीति गम्यते । नहीदानीमपीदं कार्यं कारणात्मानमन्तरेण स्वतन्त्रमेवास्ति । 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' (बृ० २।४।६) इत्यादिश्रवणात् । कारणात्मना तु सत्त्वं कार्यस्य प्रागुत्पत्तेरविशिष्टम् । ननु शब्दादिहीनं ब्रह्म जगतः कारणम् । बाढम् । नतु शब्दादिमत्कार्यं कारणात्मना हीनं प्रागुत्पत्तेरिदानीं वास्ति । तेन न शक्यते वक्तुं प्रागुत्पत्तेरसत्कार्यमिति । विस्तरेण चैतत्कार्यकारणानन्यत्ववादे वक्ष्यामः ॥ ७ ॥

---

[1] विप्रलम्भकत्वं अर्थविशेषाव्यवस्थापकत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

अत्राह—यदि स्थौल्यसावयवत्वाचेतनत्वपरिच्छिन्नत्वाशुद्ध्यादिधर्मकं कार्यं ब्रह्मकारणमभ्युपगम्येत तदपीतौ प्रलये प्रतिसंसृज्यमानं कारणाविभागमापद्यमानं कारणमात्मीयेन धर्मेण दूषयेदित्यपीतौ कारणस्यापि ब्रह्मणः कार्यस्येवाशुद्ध्यादिरूपसप्रङ्गात्सर्वज्ञं ब्रह्म जगत्कारणमित्यसमञ्जसमिदमौपनिषदं दर्शनम् । अपिच समस्तस्य विभागस्याविभागप्राप्तेः पुनरुत्पत्तौ नियमकारणाभावाद्भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीत्यसमञ्जसम् । अपिच भोक्तृणां परेण ब्रह्मणाऽविभागं गतानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तावभ्युपगम्यमानायां मुक्तानामपि पुनरुत्पत्तिप्रसङ्गादसमञ्जसम् । अथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणावतिष्ठेत, एवमप्यपीतिश्च न संभवति, कारणाव्यतिरिक्तं च कार्यं न संभवतीत्यसमञ्जसमेवेति ॥ ८ ॥

अत्रोच्यते—

## न तु दृष्टान्तभावात् ॥ ९ ॥

नैवास्मदीये दर्शने किंचिदसामञ्जस्यमस्ति । यत्तावदभिहितं कारणमपिगच्छत्कार्यं कारणमात्मीयेन धर्मेण दूषयेदिति, तददूषणं कस्मात् । दृष्टान्तभावात् । सन्ति हि दृष्टान्ता यथा कारणमपिगच्छत्कार्यं कारणमात्मीयेन धर्मेण न दूषयति । तद्यथा शरावादयो मृत्प्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः प्रकृतिमपिगच्छन्तो न तामात्मीयेन धर्मेण संसृजन्ति । रुचकादयश्च सुवर्णविकारा अपीतौ न सुवर्णमात्मीयेन धर्मेण संसृजन्ति । पृथिवीविकारश्चतुर्विधो भूतग्रामो न पृथिवीमपीतावात्मीयेन धर्मेण संसृजति । त्वत्पक्षस्य तु न कश्चिद्दृष्टान्तोऽस्ति । अपीतिरेव हि न संभवेद्यदि कारणे कार्यं स्वधर्मेणैवावतिष्ठेत । अनन्यत्वेऽपि कार्यकारणयोः कार्यस्य कारणात्मत्वं न तु कारणस्य कार्यात्मत्वं 'आरम्भणशब्दादिभ्यः' इति वक्ष्यामः ।

---

१ अपिगच्छत् लीयमानम् । २ विभागावस्था स्थितिकालः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सू० २।१।१४ )। अत्यल्पं चेदमुच्यते कार्यमपीतावात्मीयेन धर्मेण कारणं संसृजेदिति । स्थितावपि समानोऽयं प्रसङ्गः, कार्यकारणयोरनन्यत्वाभ्युपगमात् । 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ), 'आत्मैवेदं सर्वम्' ( छा० ७।२५।२ ), 'ब्रह्मैवेदममृतं पुरस्तात्' ( मु० २।२।११ ), 'सर्वं खल्विदं ब्रह्म' ( छा० ३।१४।१ ) इत्येवमाद्याभिर्हि श्रुतिभिरविशेषेण त्रिष्वपि कालेषु कार्यस्य कारणानन्यत्वं श्राव्यते । तत्र यः परिहारः कार्यस्य तद्धर्माणां चाविद्याध्यारोपितत्वान्न तैः कारणं संसृज्यत इति, अपीतावपि स समानः । अस्ति चायमपरो दृष्टान्तो यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते, अवस्तुत्वात्, एवं परमात्मापि संसारमायया न संस्पृश्यत इति । यथा स्वप्नदृगेकः स्वप्नदर्शनमायया न संस्पृश्यत इति । प्रबोधसंप्रसादयोरनन्वागतत्वात् । एवमवस्थात्रयसाक्ष्येकोऽव्यभिचार्यवस्थात्रयेण व्यभिचारिणा न संस्पृश्यते । मायामात्रं ह्येतद्यत्परमात्मनोऽवस्थात्रयात्मनावभासनं रज्ज्वा इव सर्पादिभावेनेति । अत्रोक्तं वेदान्तार्थसंप्रदायविद्भिराचार्यैः—'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते । अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा' ( गौडपा० कारि० १।१६ ) इति । तत्र यदुक्तमपीतौ कारणस्यापि कार्यस्येव स्थौल्यादिदोषप्रसङ्ग इत्येतदयुक्तम् । यत्पुनरेतदुक्तं समस्तस्य विभागस्याविभागप्राप्तेः पुनर्विभागेनोत्पत्तौ नियमकारणं नोपपद्यत इति । अयमप्यदोषः । दृष्टान्तभावादेव । यथाहि सुषुप्तिसमाध्यादावपि सत्यां स्वाभाविक्यामविभागप्राप्तौ मिथ्याज्ञानस्यानपोदितत्वात्पूर्ववत्पुनः प्रबोधे विभागो भवत्येवमिहापि भविष्यति । श्रुतिश्चात्र भवति—'इमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति' ( छा० ६।९।२,३ ) इति । यथा ह्यविभागेऽपि परमात्मनि मिथ्याज्ञानप्रतिबद्धो विभागव्य-

---

१ सति ब्रह्मणि एकीभूत न विदुरित्यज्ञानोक्तिः । इह सुषुप्तेः प्राक् प्रबोधे येन व्याघ्रादिना विभक्ता भवन्ति तदा पुनरुत्थानकाले तथैव भवन्तीति विभागोक्तिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वहारः स्वप्नवद्व्याहतः स्थितो दृश्यते, एवमपीतावपि मिथ्याज्ञानशक्तिरन्यै
वद्वैव विभागशक्तिरनुमास्यते । एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्ग इति
त्युक्तः । सम्यग्ज्ञानेन मिथ्याज्ञानस्यापोदितत्वात् । यः पुनरयं
विकल्प उत्प्रेक्षितोऽथेदं जगदपीतावपि विभक्तमेव परेण ब्रह्मणा
तेति, सोऽप्यनभ्युपगमादेव प्रतिषिद्धः । तस्मात्समञ्जसमिदं
दर्शनम् ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः प्रादुःष्युः[1] । इ
च्यते । यत्तावदभिहितं विलक्षणत्वान्नेदं जगद्ब्रह्मप्रकृतिकमिति,
प्रकृतिकतायामपि समानमेतत्, शब्दादिहीनात्प्रधानाच्छब्दा
जगत उत्पत्त्यभ्युपगमात् । अतएव च विलक्षणकार्योत्पत्त्य
त्समानः प्रागुत्पत्तेरसत्कार्यवादप्रसङ्गः । तथाऽपीतौ कार्यस्य
भागाभ्युपगमात्तद्वत्प्रसङ्गोऽपि समानः । तथा मृदितसर्वविशेषे
रेष्वपीतावविभागात्मतां गतेष्विदमस्य पुरुषस्योपादानमिदमस्ये
त्यात्प्रतिपुरुषं ये नियता भेदा न ते तथैव पुनरुत्पत्तौ नियन्तुं
कारणाभावात् । विनैव कारणेन नियमेऽभ्युपगम्यमाने कार
साम्यान्मुक्तानामपि पुनर्बन्धप्रसङ्गः । अथ केचिद्भेदा अपीतौ
मापद्यन्ते केचिन्नेति चेत् । ये नापद्यन्ते तेषां प्रधानकार्यत्वं न
ल्येवमेते दोषाः साधारणत्वान्नान्यतरस्मिन्पक्षे चोदयितव्या भ
पत्तामेवैषां द्रढयति । अवश्याश्रयितव्यत्वात् ॥ १० ॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः ॥ ११ ॥

इतश्च नागमगम्येऽर्थे केवलेन तर्केण प्रत्यवस्थातव्यम् ।
गमाः पुरुषोत्प्रेक्षामात्रनिबन्धनास्तर्का अप्रतिष्ठिता भवन्ति ।
निरङ्कुशत्वात् । तथाहि कैश्चिदभियुक्तैर्यत्नेनोत्प्रेक्षितास्तर्का

१ प्रादुःष्युः प्रादुर्भवेयुः । २ तर्कस्य कैवल्यमनुग्राह्यागमराहित्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तैरन्यैराभास्यमाना दृश्यन्ते । तैरप्युत्प्रेक्षिताः सन्तस्ततोऽन्यैराभास्यन्त इति न प्रतिष्ठितत्वं तर्काणां शक्यमाश्रयितुं, पुरुषमतिवैरूप्यात् । अथ कस्यचित्प्रसिद्धमाहात्म्यस्य कपिलस्य चान्यस्य वा संमतस्तर्कः प्रतिष्ठित इत्याश्रीयेत । एवमप्यप्रतिष्ठितत्वमेव । प्रसिद्धमाहात्म्यानुमतानामपि तीर्थकराणां कपिलकणभुक्प्रभृतीनां परस्परविप्रतिपत्तिदर्शनात् । अथोच्येतान्यथा वयमनुमास्यामहे यथा नाप्रतिष्ठादोषो भविष्यति । नहि प्रतिष्ठितस्तर्क एव नास्तीति शक्यते वक्तुम् । एतदपि हि तर्काणामप्रतिष्ठितत्वं तर्केणैव प्रतिष्ठाप्यते । केषांचित्तर्काणामप्रतिष्ठितत्वदर्शनेनान्येषामपि तज्जातीयकानां तर्काणामप्रतिष्ठितत्वकल्पनात् । सर्वतर्काप्रतिष्ठायां च लोकव्यवहारोच्छेदप्रसङ्गः । अतीतवर्तमानाध्वसाम्येन ह्यनागतेऽप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्तमानो लोको दृश्यते । श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्धारणं तर्केणैव वाक्यवृत्तिनिरूपणरूपेण क्रियते । मनुरपि चैवं मन्यते—'प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥' इति । 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥' ( १२।१०५,१०६ ) इति च ब्रुवन् । अयमेव तर्कस्यालंकारो यदप्रतिष्ठितत्वं नाम । एवंहि तावद्यत्तर्कपरित्यागेन निरवद्यस्तर्कः प्रतिपत्तव्यो भवति । नहि पूर्वजो मूढ आसीदित्यात्मनापि मूढेन भवितव्यमिति किंचिदस्ति प्रमाणम् । तस्मान्न तर्काप्रतिष्ठानं दोष इति चेत्, एवमप्यविमोक्षप्रसङ्गः । यद्यपि कचिद्विषये तर्कस्य प्रतिष्ठितत्वमुपलक्ष्यते तथापि प्रकृते तावद्विषये प्रसज्यत एवाप्रतिष्ठितत्वदोषादनिर्मोक्षस्तर्कस्य । नहीदमतिगम्भीरं भावयाथात्म्यं मुक्तिनिबन्धनमागममन्तरेणोत्प्रेक्षितुमपि शक्यम् । रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षगोचरः, लिङ्गाद्यभावाच्च नानुमानादीनामिति चावोचाम । अपिच सम्यग्ज्ञानान्मोक्ष इति सर्वेषां मोक्षवादिनामभ्युपगमः । तच्च सम्यग्ज्ञानमेकरूपं

---

१ धर्मस्य शुद्धिरधर्माद्भेदनिर्णयः । २ अतिगम्भीरत्वमागमातिरेकिमानायोग्यत्वम् । भावयाथात्म्यं कारणगतमद्वितीयत्वम् । मुक्तिनिबन्धनं परमानन्दसच्चिदेकतानत्वम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वस्तुतन्त्रत्वात् । एकरूपेण ह्यवस्थितो योऽर्थः स परमार्थः । पयं ज्ञानं सम्यग्ज्ञानमित्युच्यते यथाग्निरुष्ण इति । तत्रैवं स ग्ज्ञाने पुरुषाणां विप्रतिपत्तिरनुपपन्ना । तर्कज्ञानानां त्वन्यो स्प्रसिद्धा विप्रतिपत्तिः । यद्धि केनचित्तार्किकेणेदमेव सम्य प्रतिपादितं तदपरेण व्युत्थाप्यते, तेनापि प्रतिष्ठापितं ततोऽपरे प्यत इति प्रसिद्धं लोके । कथमेकरूपानवस्थितविषयं तर्कप्र ग्ज्ञानं भवेत् । नच प्रधानवादी तर्कविदामुत्तम इति सर्वै परिगृहीतो येन तदीयं मतं सम्यग्ज्ञानमिति प्रतिपद्येमहि । न न्तेऽतीतानागतवर्तमानास्तार्किका एकस्मिन्देशे काले च येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात् । नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोप नितस्य ज्ञानस्य सम्यक्त्वमतीतानागतवर्तमानैः सर्वैरपि तार्कि मशक्यम् । अतः सिद्धमस्यैवौपनिषदस्य ज्ञानस्य सम्यग्ज्ञ अतोऽन्यत्र सम्यग्ज्ञानत्वानुपपत्तेः संसाराविमोक्ष एव प्रसज्य आगमवशेनागमानुसारितर्कवशेन च चेतनं ब्रह्म जगतः कार ञ्चेति स्थितम् ॥ ११ ॥

## ४ शिष्टपरिग्रहाधिकरणम् । सू० १२

### एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥

वैदिकस्य दर्शनस्य प्रत्यासन्नत्वाद्गुरुतरतर्कबलोपेतत्वाद्वेदा कैश्चिच्छिष्टैः केनचिदंशेन परिगृहीतत्वात्प्रधानकारणवादं ता यस्तर्कनिमित्त आक्षेपो वेदान्तवाक्येषूद्भावितः स परिहृतः । दिवादव्यपाश्रयेणापि कैश्चिन्मन्दमतिभिर्वेदान्तवाक्येषु पुन आक्षेप आशङ्क्यत इत्यतः प्रधानमल्लनिबर्हणन्यायेनातिदिश ह्यन्त इति परिग्रहाः न परिग्रहा अपरिग्रहाः शिष्टानामपरिग्र परिग्रहाः । एतेन प्रकृतेन प्रधानकारणवादनिराकरणकारणेन व्यासप्रभृतिभिः केनचिदंशेनापरिगृहीता येऽण्वादिकारणवादा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पिद्धतया व्याख्याता निराकृता द्रष्टव्याः तुल्यत्वान्निराकरणकारणस्य, नात्र पुनराशङ्कितव्यं किंचिदस्ति । तुल्यमत्रापि परमगम्भीरस्य जगत्कारणस्य तर्कानवगाह्यत्वं तर्कस्याप्रतिष्ठितत्वमन्यथानुमानेऽप्यविमोक्ष आगमविरोधश्चेत्येवंजातीयकं निराकरणकारणम् ॥ १२ ॥

## ५ भोक्त्रापत्त्यधिकरणम् । सू० १३

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥

अन्यथा पुनर्ब्रह्मकारणवादस्तर्कबलेनैवाक्षिप्यते । यद्यपि श्रुतिः प्रमाणं स्वविषये भवति तथापि प्रमाणान्तरेण विषयापहारेऽन्यपरा[1] भवितुमर्हति । यथा मन्त्रार्थवादौ । तर्कोऽपि स्वविषयादन्यत्राप्रतिष्ठितः स्यात् यथा धर्माधर्मयोः । किमतो यद्येवम् । अत इदमयुक्तं यत्प्रमाणान्तरप्रसिद्धार्थबाधनं श्रुतेः । कथं पुनः प्रमाणान्तरप्रसिद्धोऽर्थः श्रुत्या बाध्यत इति । अत्रोच्यते—प्रसिद्धो ह्ययं भोक्तृभोग्यविभागो लोके भोक्ता चेतनः शारीरो भोग्याः शब्दादयो विषया इति । यथा भोक्ता देवदत्तो भोज्य ओदन इति । तस्य च विभागस्याभावः प्रसज्येत यदि भोक्ता भोग्यभावमापद्येत । भोग्यं वा भोक्तृभावमापद्येत । तयोश्चेतरेतरभावापत्तिः परमकारणाद्ब्रह्मणोऽनन्यत्वात्प्रसज्येत । नचास्य प्रसिद्धस्य विभागस्य बाधनं युक्तम् । यथा त्वद्यत्वे भोक्तृभोग्ययोर्विभागो दृष्टस्तथातीतानागतयोरपि कल्पयितव्यः । तस्मात्प्रसिद्धस्यास्य भोक्तृभोग्यविभागस्याभावप्रसङ्गादयुक्तमिदं ब्रह्मकारणतावधारणमिति चेत्कश्चिच्चोदयेत्तं प्रति ब्रूयात्—स्याल्लोकवदिति । उपपद्यत एवायमस्मत्पक्षेऽपि विभागः एवं लोके दृष्टत्वात् । तथाहि—समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनवीचीतरङ्गबुद्बुदादीनामितरेतरविभाग इतरेतरसंश्लेषादिलक्षणश्च व्यवहार उपलभ्यते । नच समुद्रादुदकात्मनोऽनन्यत्वेऽपि तद्विकाराणां फेनतरङ्गादीनामितरेतरभावापत्तिर्भवति । नच तेषामितरेतरभावानापत्तावपि समुद्रात्मनोऽन्यत्वं भवति । एवमिहापि नच

[1] अन्यपरत्वं गौणार्थकत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भोक्तृभोग्ययोरितरेतरभावापत्तिः, नच परस्माद्ब्रह्मणोऽन्यत्वं
यद्यपि भोक्ता न ब्रह्मणो विकारः । 'तत्सृष्ट्वा तदेवानुप्राविशत्'
२।६ ) इति स्रष्टुरेवाविकृतस्य कार्यानुप्रवेशेन भोक्तृत्वश्रवणात्
कार्यमनुप्रविष्टस्यास्त्युपाधिनिमित्तो विभाग आकाशस्येव घटा
मित्त इत्यतः परमकारणाद्ब्रह्मणोऽनन्यत्वेऽप्युपपद्यते भोक्तृभो
विभागः समुद्रतरङ्गादिन्यायेनेत्युक्तम् ॥ १३ ॥

६ आरम्भणाधिकरणम् । सू० १४–२०

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥

अभ्युपगम्य चेमं व्यावहारिकं भोक्तृभोग्यलक्षणं विभागं
दिति परिहारोऽभिहितः । नत्वयं विभागः परमार्थतोऽस्ति
कार्यकारणयोरनन्यत्वमवगम्यते । कार्यमाकाशादिकं बहुप्रपञ्चं
कारणं परंब्रह्म, तस्मात्कारणात्परमार्थतोऽनन्यत्वं व्यतिरे
कार्यस्यावगम्यते । कुतः । आरम्भणशब्दादिभ्यः । आरम्भण
वत् । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायामुच्य
सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं
नामधेयं मृत्तिकेत्येव सत्यम्' ( छा० ६।१।१ ) इति । एतदुक्तं
एकेन मृत्पिण्डेन परमार्थतो मृदात्मना विज्ञातेन सर्वं मृन्मयं
वोदञ्चनादिकं मृदात्मकत्वाविशेषाद्विज्ञातं भवेत् । यतो
विकारो नामधेयं वाचैव केवलमस्तीत्यारभ्यते । विकारो
उदञ्चनं चेति नतु वस्तुवृत्तेन विकारो नाम कश्चिदस्ति ।
मात्रं ह्येतदनृतं मृत्तिकेत्येव सत्यमिति । एष ब्रह्मणो दृष्टान्त
तत्र श्रुताद्वाचारम्भणशब्दाद्दार्ष्टान्तिकेऽपि ब्रह्मव्यतिरेकेण
भाव इति गम्यते पुनश्च तेजोबन्नानां ब्रह्मकार्यतामुक्त्वा
र्याणां तेजोबन्नव्यतिरेकेणाभावं ब्रवीति—'अपागादग्नेरग्नित्वं
विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्' ( छा० ६।४।१

१ विभागो जन्म । यद्वा तथापीतिशब्देनैवोक्तः परिहारः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दिना। आरम्भणशब्दादिभ्य इत्यादिशब्दात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि' (छा० ६।८।७), 'इदं सर्वं यदयमात्मा' (बृ० २।४।६), 'ब्रह्मैवेदं सर्वम्' (मु० २।२।११), 'आत्मैवेदं सर्वम्' (छा० ७।२५।२), 'नेह नानास्ति किंचन' (बृ० ४।४।१९) इत्येवमाद्यप्यात्मैकत्वप्रतिपादनपरं वचनजातमुदाहर्तव्यम्। चान्यथैकविज्ञानेन सर्वविज्ञानं संपद्यते। तस्माद्यथा घटकरकाद्याकाशानां महाकाशानन्यत्वं, यथाच मृगतृष्णिकोदकादीनामूषरादिभ्योऽनन्यत्वं दृष्टनष्टस्वरूपत्वात्स्वरूपेणानुपाख्यत्वात्, एवमस्य भोग्यभोक्त्रादिप्रपञ्चजातस्य ब्रह्मव्यतिरेकेणाभाव इति द्रष्टव्यम्। नन्वनेकात्मकं ब्रह्म, यथा वृक्षोऽनेकशाख एवमनेकशक्तिप्रवृत्तियुक्तं ब्रह्म। अत एकत्वं नानात्वं चोभयमपि सत्यमेव। यथा वृक्ष इत्येकत्वं शाखा इति नानात्वम्। यथाच समुद्रात्मनैकत्वं फेनतरङ्गाद्यात्मना नानात्वम्। यथाच मृदात्मनैकत्वं घटशरावाद्यात्मना नानात्वम्। तत्रैकत्वांशेन ज्ञानान्मोक्षव्यवहारः सेत्स्यति। नानात्वांशेन तु कर्मकाण्डाश्रयौ लौकिकवैदिकव्यवहारौ सेत्स्यत इति। एवंच मृदादिदृष्टान्ता अनुरूपा भविष्यन्तीति। नैवं स्यात्। 'मृत्तिकेत्येव सत्यम्' इति प्रकृतिमात्रस्य दृष्टान्ते सत्यत्वावधारणात्। वाचारम्भणशब्देन च विकारजातस्यानृतत्वाभिधानात्। दार्ष्टान्तिकेऽपि 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इति च परमकारणस्यैवैकस्य सत्यत्वावधारणात् 'स आत्मा तत्त्वमसि श्वेतकेतो' इति च शारीरस्य ब्रह्मभावोपदेशात्। स्वयं प्रसिद्धं ह्येतच्छारीरस्य ब्रह्मात्मत्वमुपदिश्यते न यत्नान्तरसाध्यम्। अतश्चेदं शास्त्रीयं ब्रह्मात्मत्वमवगम्यमानं स्वाभाविकस्य शारीरात्मत्वस्य बाधकं संपद्यते, रज्ज्वादिबुद्धय इव सर्पादिबुद्धीनाम्। बाधिते च शारीरात्मत्वे तदाश्रयः समस्तः स्वाभाविको व्यवहारो बाधितो भवति यत्प्रसिद्धये नानात्वांशोऽपरो ब्रह्मणः कल्प्येत। दर्शयति —'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५)

१ दृष्टं प्रातीतिकं नष्टमनित्यं यत्स्वरूपं तद्रूपेणानुपाख्यत्वात्सत्तास्फूर्तिशून्यत्वादनन्यमिति संबन्धः। २ स्वभावोऽविद्या तया कृतः स्वाभाविकः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादिना ब्रह्मात्मत्वदर्शिनं प्रति समस्तस्य क्रियाकारक
व्यवहारस्याभावम् । नचायं व्यवहाराभावोऽवस्थाविशेषनिब
यत इति युक्तं वक्तुम्, 'तत्त्वमसि' इति ब्रह्मात्मभावस्यानव
निबन्धनत्वात् । तस्करदृष्टान्तेन चानृताभिसंधस्य बन्धनं सत्या
च मोक्षं दर्शयन्नेकत्वमेवैकं पारमार्थिकं दर्शयति ( छा० ६
मिथ्याज्ञानविजृम्भितं च नानात्वम् । उभयसत्यतायां हि क
रगोचरोऽपि जन्तुरनृताभिसंध इत्युच्येत । 'मृत्योः स मृत्यु
इह नानेव पश्यति' ( बृ० ४।४।१९ ) इति च भेददृष्टिमप
र्शयति । नचास्मिन्दर्शने ज्ञानान्मोक्ष इत्युपपद्यते, सम्यग्ज्ञा
कस्यचिन्मिथ्याज्ञानस्य संसारकारणत्वेनानभ्युपगमात् । उभ
हि कथमेकत्वज्ञानेन नानात्वज्ञानमपनुद्यत इत्युच्यते । ननु
न्त्वाभ्युपगमे नानात्वाभावात्प्रत्यक्षादीनि लौकिकानि प्रमाणानि
न्येरन्निर्विषयत्वात्, स्थाण्वादिष्विव पुरुषादिज्ञानानि । तथा
षेधशास्त्रमपि भेदापेक्षत्वात्तदभावे व्याहन्येत, मोक्षशास्त्रस्य
शासित्रादिभेदापेक्षत्वात्तदभावे व्याघातः स्यात् । कथं चानृते
शास्त्रेण प्रतिपादितस्यात्मैकत्वस्य सत्यत्वमुपपद्येतेति । अत्र
नैष दोषः । सर्वव्यवहाराणामेव प्राग्ब्रह्मात्मताविज्ञानात्सत्यत्व
स्वप्नव्यवहारस्येव प्राक्प्रबोधात् । यावद्धि न सत्यात्मैकत्वप्रति
त्प्रमाणप्रमेयफललक्षणेषु विकारेष्वनृतत्वबुद्धिर्न कस्यचिदुत्प
कारानेव त्वहं ममेत्यविद्ययात्मात्मीयेन भावेन सर्वो जन्तुः
स्वाभाविकीं ब्रह्मात्मतां हित्वा । तस्मात्प्राग्ब्रह्मात्मताप्रतिबो
सर्वो लौकिको वैदिकश्च व्यवहारः । यथा सुप्तस्य प्राकृतस्य ज
उच्चावचान्भावान्पश्यतो निश्चितमेव प्रत्यक्षाभिमतं विज्ञानं
क्प्रबोधात्, नच प्रत्यक्षाभासाभिप्रायस्तत्काले भवति, त
त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपप

१ एकत्वस्यैकान्तः कैवल्यम् । २ व्याहन्येरन्नप्रमाणानि स्युः ।
भावः । बाधो मिथ्यात्वनिश्चयः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

रज्जुसर्पेण दष्टो म्रियते । नापि मृगतृष्णिकाम्भसा पानावगाहनादिप्रयोजनं क्रियत इति । नैष दोषः । शङ्काविषादिनिमित्तमरणादिकार्योपलब्धेः । स्वप्नदर्शनावस्थस्य च सर्पदंशनोदकस्नानादिकार्यदर्शनात् । तत्कार्यमप्यनृतमेवेति चेद्ब्रूयात् । तत्र ब्रूमः—यद्यपि स्वप्नदर्शनावस्थस्य सर्पदंशनोदकस्नानादिकार्यमनृतं तथापि तदवगतिः सत्यमेव फलं, प्रतिबुद्धस्याप्यबाध्यमानत्वात् । नहि स्वप्नादुत्थितः स्वप्नदृष्टं सर्पदंशनोदकस्नानादिकार्यं मिथ्येति मन्यमानस्तदवगतिमपि मिथ्येति मन्यते कश्चित् । एतेन स्वप्नदृशोऽवगत्यबाधनेन देहमात्रात्मवादो दूषितो वेदितव्यः । तथाच श्रुतिः—'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने' (छा० ५।२।९) इत्यसत्येन स्वप्नदर्शनेन सत्यायाः समृद्धेः प्रतिपत्तिं दर्शयति । तथा प्रत्यक्षदर्शनेषु केषुचिदरिष्टेषु जातेषु 'न चिरमिव जीविष्यतीति विद्यात्' इत्युक्त्वा 'अथ स्वप्नाः पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति' इत्यादिना तेन तेनासत्येनैव स्वप्नदर्शनेन सत्यं मरणं सूच्यत इति दर्शयति । प्रसिद्धं चेदं लोकेऽन्वयव्यतिरेककुशलानामीदृशेन स्वप्नदर्शनेन साध्वागमः सूच्यत ईदृशेनासाध्वागम इति । तथाकारादिसत्याक्षरप्रतिपत्तिर्दृष्टा रेखानृताक्षरप्रतिपत्तेः[1] । अपिचान्त्यमिदं प्रमाणमात्मैकत्वस्य प्रतिपादकं नातः परं किंचिदाकाङ्क्ष्यमस्ति । यथाहि लोके यजेतेत्युक्ते किं केन कथमित्याकाङ्क्ष्यते नैवं 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्युक्ते किंचिदन्यदाकाङ्क्ष्यमस्ति, सर्वात्मैकत्वविषयत्वावगतेः । सति ह्यन्यस्मिन्नवशिष्यमाणेऽर्थ आकाङ्क्षा स्यात् । नत्वात्मैकत्वव्यतिरेकेणावशिष्यमाणोऽन्योऽर्थोऽस्ति य आकाङ्क्ष्येत । न चेयमवगतिर्नोत्पद्यत इति शक्यं वक्तुम्, 'तद्धास्य विजज्ञौ' (छा० ६।१६।३) इत्यादिश्रुतिभ्यः । अवगतिसाधनानां च श्रवणादीनां वेदानुवचनादीनां च विधानात् । नचेयमवगतिरनर्थिका भ्रान्तिर्वेति शक्यं वक्तुम् । अविद्यानिवृत्तिफलदर्शनात्, बाधकज्ञानान्तराभावाच्च । प्राक्चात्मैकत्वावगतेरव्याहतः सर्वः सत्यानृ-

[1] रेखास्वकारत्वादिभ्रान्त्या सत्या अकारादयो ज्ञायन्त इति प्रसिद्धम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्व्यवहारो लौकिको वैदिकश्चेत्यवोचाम। तस्मादन्त्येन प्रमाणेन प्रतिपादित आत्मैकत्वे समस्तस्य प्राचीनस्य भेदव्यवहारस्य बाधितत्वान्नानेकात्मकब्रह्मकल्पनावकाशोऽस्ति। ननु मृदादिदृष्टान्तप्रणयनात्परिणामवद्ब्रह्म शास्त्रस्याभिमतमिति गम्यते। परिणामिनो हि मृदादयोऽर्था लोके समधिगता इति। नेत्युच्यते। 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' (बृ० ४।४।२५) 'स एष नेति नेत्यात्मा' (बृ० ३।९।२६), 'अस्थूलमनणु' (बृ० ३।८।८) इत्याद्याभ्यः सर्वविक्रियाप्रतिषेधश्रुतिभ्यो ब्रह्मणः कूटस्थत्वावगमात्। न ह्येकस्य ब्रह्मणः परिणामधर्मत्वं तद्रहितत्वं च शक्यं प्रतिपत्तुम्। स्थितिगतिवत्स्यादिति चेत्। न। कूटस्थस्येति विशेषणात्। नहि कूटस्थस्य ब्रह्मणः स्थितिगतिवदनेकधर्माश्रयत्वं संभवति। कूटस्थं च नित्यं ब्रह्म सर्वविक्रियाप्रतिषेधादित्यवोचाम। नच यथा ब्रह्मण आत्मैकत्वदर्शनं मोक्षसाधनमेवं जगदाकारपरिणामित्वदर्शनमपि स्वतन्त्रमेव कस्मैचित्फलायाभिप्रेयते। प्रमाणाभावात्। कूटस्थब्रह्मात्मविज्ञानादेव हि फलं दर्शयति शास्त्रम्—'स एष नेति नेत्यात्मा' इत्युपक्रम्य 'अभयं वै जनक प्राप्तोऽसि' (बृ० ४।२।४) इत्येवंजातीयकम्। तत्रैतत्सिद्धं भवति—ब्रह्मप्रकरणे सर्वधर्मविशेषरहितब्रह्मदर्शनादेव फलसिद्धौ सत्यां यत्तत्राफलं श्रूयते ब्रह्मणो जगदाकारपरिणामित्वादि तद्ब्रह्मदर्शनोपायत्वेनैव विनियुज्यते, फलवत्संनिधावफलं तदङ्गमितिवत्, नतु स्वतन्त्रं फलाय कल्प्यत इति। नहि परिणामवत्त्वविज्ञानात्परिणामवत्त्वमात्मनः फलं स्यादिति वक्तुं युक्तं, कूटस्थनित्यत्वान्मोक्षस्य। कूटस्थब्रह्मात्मवादिन एकत्वैकान्त्यादीशित्रीशितव्याभाव ईश्वरकारणप्रतिज्ञाविरोध इति चेत्। न। अविद्यात्मकनामरूपबीजव्याकरणापेक्षत्वात्सर्वज्ञत्वस्य। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इत्यादिवाक्येभ्यो नित्यशुद्धबुद्धमुक्तस्वरूपात्सर्वज्ञात्सर्वशक्तेरीश्वराज्जगज्जनिस्थितिप्रलया नाचेतनात्प्रधानादन्यस्माद्वेत्येषोऽर्थः प्रतिज्ञातः 'जन्माद्यस्य यतः' (ब्र० सू० १।१।४) इति। सा प्रतिज्ञा तद

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तद्विरुद्धोऽर्थः पुनरिहोच्यते । कथं नोच्यतेऽत्यन्तमात्मन एकत्वमद्विती-यत्वं च ब्रुवता । शृणु यथा नोच्यते । सर्वज्ञस्येश्वरस्यात्मभूत इवावि-द्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते । ताभ्यामन्यः सर्वज्ञ ईश्वरः 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' ( छा० ८।१४।१ ) इति श्रुतेः । 'नामरूपे व्याक-रवाणि' ( छा० ६।३।२ ), 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' ( तै० आ० ३।१२।७ ), 'एकं बीजं बहुधा यः करोति' ( श्वे० ६।१२ ) इत्यादिश्रुतिभ्यश्च । एवमविद्याकृतनामरूपो-पाध्यनुरोधीश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि । स च स्वात्मभूतानेव घटाकाशस्थानीयानविद्याप्रत्युपस्थापितनामरूपकृतकार्य-करणसंघातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे व्यवहारविषये । तदेवमविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्वज्ञत्वं सर्वश-क्तित्वं च न परमार्थतो विद्ययापास्तसर्वोपाधिस्वरूप आत्मनीशित्रीशि-तव्यसर्वज्ञत्वादिव्यवहार उपपद्यते । तथाचोक्तम्—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' ( छा० ७।२४।१ ) इति, 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० ४।५।१५) इत्यादिना च । एवं परमार्थावस्थायां सर्वव्यवहाराभावं वदन्ति वेदान्ताः सर्वे । तथे-श्वरगीतास्वपि—'न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः । न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' ( गी० ५।१४-१५ ) इति परमार्थावस्थायामीशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते । व्यव-हारावस्थायां तूक्तः श्रुतावपीश्वरादिव्यवहारः 'एष सर्वेश्वर एष भूताधि-पतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय' ( बृ० ४।४।२२ ) इति । तथाचेश्वरगीतास्वपि—'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया' ( गी० १८।६१ ) इति । सूत्रकारोऽपि परमार्थाभिप्रायेण तदनन्यत्वमित्याह । व्यवहाराभि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रायेण तु स्याल्लोकवदिति महासमुद्रस्थानीयतां ब्रह्मणः कथयति
त्याख्यायैव कार्यप्रपञ्चं परिणामप्रक्रियां चाश्रयति सगुणेषूपा
क्ष्यत इति ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

इतश्च कारणादनन्यत्वं कार्यस्य, यत्कारणं भाव एव
कार्यमुपलभ्यते, नाभावे । तद्यथा सत्यां मृदि घट
सत्सु च तन्तुषु पटः । नच नियमेनान्यभावेऽन्यस्योप
नह्यश्वो गोरन्यः सन् गोर्भाव एवोपलभ्यते । नच कुलालभाव
उपलभ्यते । सत्यपि निमित्तनैमित्तिकभावेऽन्यत्वात् । नन्वन्
ऽप्यन्यस्योपलब्धिर्नियता दृश्यते, यथाग्निभावे धूमस्येति ।
उद्वापितेऽप्यग्नौ गोपालघुटिकादिधारितस्य धूमस्य दृश्यमानत्वा
धूमं कयाचिदवस्थया विशिष्यादीदृशो धूमो नासत्यग्नौ
नैवमपि कश्चिद्दोषः तद्भावानुरक्तां हि बुद्धिं कार्यकारणयोरन
वयं वदामः । नचासावग्निधूमयोर्विद्यते । 'भावाच्चोपलब्धे'रिति
त्रम् । न केवलं शब्दादेव कार्यकारणयोरनन्यत्वं, प्रत्यक्षो
वाच्च तयोरनन्यत्वमित्यर्थः । भवतिहि प्रत्यक्षोपलब्धिः कार्य
न्यत्वे । तद्यथा—तन्तुसंस्थाने पटे तन्तुव्यतिरेकेण पटो
नैवोपलभ्यते केवलास्तु तन्तव आतानवितानवन्तः प्रत्यक्ष
तथा तन्तुष्वंशवोंऽशुषु तदवयवाः । अनया प्रत्यक्षोपलब्ध्या
कृष्णानि त्रीणि रूपाणि ततो वायुमात्रमाकाशमात्रं चेत्
(छा० ६।४) ततः परं ब्रह्मैकमेवाद्वितीयं, तत्र सर्वप्रमाणा
वोचाम ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

इतश्च कारणात्कार्यस्यानन्यत्वं, यत्कारणं प्रागुत्पत्तेः
कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते । 'सदेव सोम्य

---

१ कारणस्य भावे सत्त्वे उपलब्धौ च कार्यस्य सत्त्वादुपलब्धेश्चानन्यत्वं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सीत्' (छा० ६।२।१), 'आत्मा वा इदमेक एवाग्र आसीत्' (ऐ० आ० २।४।१।१) इत्यादाविदंशब्दगृहीतस्य कार्यस्य कारणेन सामानाधिकरण्यात्। यच्च यदात्मना यत्र न वर्तते न तत्तत उत्पद्यते, यथा सिकताभ्यस्तैलम्। तस्मात्प्रागुत्पत्तेरनन्यत्वादुत्पन्नमप्यनन्यदेव कारणात्कार्यमित्यवगम्यते। यथाच कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरत्येवं कार्यमपि जगत्त्रिषु कालेषु सत्त्वं न व्यभिचरति। एकं च पुनः सत्त्वमतोऽप्यनन्यत्वं कारणात्कार्यस्य ॥ १६ ॥

## असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

ननु क्वचिदसत्त्वमपि प्रागुत्पत्तेः कार्यस्य व्यपदिशति श्रुतिः—'असदेवेदमग्र आसीत्' (छा० ३।१९।१) इति, 'असद्वा इदमग्र आसीत्' (तै० २।७।१) इति च। तस्मादसद्व्यपदेशान्न प्रागुत्पत्तेः कार्यस्य सत्त्वमिति चेत्। नेति ब्रूमः। नह्ययमत्यन्तासत्त्वाभिप्रायेण प्रागुत्पत्तेः कार्यस्यासद्व्यपदेशः, किं तर्हि व्याकृतनामरूपत्वाद्धर्मादव्याकृतनामरूपत्वं धर्मान्तरं तेन धर्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः सत एव कार्यस्य कारणरूपेणानन्यस्य। कथमेतदवगम्यते। वाक्यशेषात्। यदुपक्रमे सन्दिग्धार्थं वाक्यं तच्छेषान्निश्चीयते। इह च तावत् 'असदेवेदमग्र आसीत्' इत्यसच्छब्देनोपक्रमे निर्दिष्टं यत्तदेव पुनस्तच्छब्देन परामृश्य सदिति विशिनष्टि 'तत्सदासीत्' इति। असतश्च पूर्वापरकालासंबन्धादासीच्छब्दानुपपत्तेश्च। 'असद्वा इदमग्र आसीत्' इत्यत्रापि 'तदात्मानं स्वयमकुरुत' इति वाक्यशेषे विशेषणान्नात्यन्तासत्त्वम्। तस्माद्धर्मान्तरेणायमसद्व्यपदेशः प्रागुत्पत्तेः कार्यस्य। नामरूपव्याकृतं हि वस्तु सच्छब्दार्हं लोके प्रसिद्धम्। अतः प्राङ्नामरूपव्याकरणादसदिवासीदित्युपचर्यते ॥ १७ ॥

---

१ अग्रे शून्यमासीच्छून्यादेव जगदभूदिति पूर्वः पक्षः। राद्धान्ते तु इदं जगदग्रे सृष्टेः सदव्याकृतनामरूपत्वादसत्तुल्यमतिसूक्ष्मं ब्रह्मैवासीत्। ततो ब्रह्मणः सत् व्याकृतनामरूपं जगदजायतेति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

युक्तेश्च प्रागुत्पत्तेः कार्यस्य सत्त्वमनन्यत्वं च कारणा
शब्दान्तराच्च । युक्तिस्तावद्वर्ण्यते—दधिघटरुचकाद्यर्थिभिः प्रति
कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्य
दध्यर्थिभिर्मृत्तिकोपादीयते न घटार्थिभिः क्षीरं तदसत्कार्यवा
द्येत । अविशिष्टे हि प्रागुत्पत्तेः सर्वस्य सर्वत्रासत्त्वे कस्
दध्युत्पद्यते न मृत्तिकायाः, मृत्तिकाया एव च घट उत्पद्यते न
अथाविशिष्टेऽपि प्रागसत्त्वे क्षीर एव दध्नः कश्चिदतिशयो
कायां, मृत्तिकायामेव च घटस्य कश्चिदतिशयो न क्षीर
तर्ह्यतिशयवत्त्वात्प्रागवस्थाया असत्कार्यवादहानिः सत्कार्यवा
शक्तिश्च कारणस्य कार्यनियमार्था कल्प्यमाना नान्याऽसती
नियच्छेत् । असत्त्वाविशेषादन्यत्वाविशेषाच्च । तस्मात्कारण
शक्तिः शक्तेश्चात्मभूतं कार्यम् । अपिच कार्यकारणयोर्द्र
चाश्वमहिषवद्भेदबुद्ध्यभावात्तादात्म्यमभ्युपगन्तव्यम् । समवा
मपि समवायस्य समवायिभिः संबन्धेऽभ्युपगम्यमाने तस्य
संबन्धः कल्पयितव्य इत्यनवस्थाप्रसङ्गः । अनभ्युपगम्यमाने
दप्रसङ्गः । अथ समवायः स्वयं संबन्धरूपत्वादनपेक्ष्यैवा
संबध्यते, संयोगोऽपि तर्हि स्वयं संबन्धरूपत्वादनपेक्ष्यैव
बध्येत । तादात्म्यप्रतीतेश्च द्रव्यगुणादीनां समवायकल्पना
कथं च कार्यमवयविद्रव्यं कारणेष्ववयवद्रव्येषु वर्तमानं
समस्तेष्ववयवेषु वर्तेतोत प्रत्यवयवम् । यदि तावत्समस्तेषु
ऽवयव्यनुपलब्धिः प्रसज्येत, समस्तावयवसंनिकर्षस्याशक्यत
बहुत्वं समस्तेष्वाश्रयेषु वर्तमानं व्यस्ताश्रयग्रहणेन गृह्यते ।
वशः समस्तेषु वर्तेत तदाप्यारम्भकावयवव्यतिरेकेणावय
कल्प्येरन् यैरारम्भकेष्ववयवेष्ववयवशोऽवयवी वर्तेत कोशाव

---

१ अतिशयः कार्यधर्मः कारणधर्मो वा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्णावयवैरसिः कोशं व्याप्नोति । अनवस्था चैवं प्रसज्येत । तेषु ते-
ववयवेषु वर्तयितुमन्येषामन्येषामवयवानां कल्पनीयत्वात् । अथ
त्यवयवं वर्तेत तदैकत्र व्यापारेऽन्यत्राव्यापारः स्यात् । नहि देवदत्तः
ुघ्ने संनिधीयमानस्तदहरेव पाटलिपुत्रेऽपि संनिधीयेत । युगपदनेकत्र
त्तावनेकत्वप्रसङ्गः स्यात् । देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवा-
सिनोः । गोत्वादिवत्प्रत्येकं परिसमाप्तेर्न दोष इति चेत् । न । तथा
तीत्यभावात् । यदि गोत्वादिवत्प्रत्येकं परिसमाप्तोऽवयवी स्याद्यथा
ोत्वं प्रतिव्यक्ति प्रत्यक्षं गृह्यत एवमवयव्यपि प्रत्यवयवं प्रत्यक्षं गृह्येत ।
चैवं नियतं गृह्यते । प्रत्येकपरिसमाप्तौ चावयविनः कार्येणाधिकारात्तस्य
ैकत्वाच्छृङ्गेणापि स्तनकार्यं कुर्यादुरसा च पृष्ठकार्यम् । नचैवं दृश्यते ।
ागुत्पत्तेश्च कार्यस्यासत्त्व उत्पत्तिरकर्तृका निरात्मिका च स्यात् । उत्पत्तिश्च
ाम क्रिया, सा सकर्तृकैव भवितुमर्हति गत्यादिवत् । क्रिया च नाम स्यादक-
र्तृका चेति विप्रतिषिध्येत । घटस्य चोत्पत्तिरुच्यमाना न घटकर्तृका किं-
त्वन्यकर्तृकेति कल्प्या स्यात् । तथा कपालादीनामप्युत्पत्तिरुच्यमा-
नान्यकर्तृकैव कल्प्येत । तथाच सति घट उत्पद्यत इत्युक्ते कुलालादीनि
कारणान्युत्पद्यन्त इत्युक्तं स्यात् । नच लोके घटोत्पत्तिरित्युक्ते कुलालादी-
नामप्युत्पद्यमानता प्रतीयते । उत्पन्नताप्रतीतेश्च । अथ स्वकारणसत्तासंबन्ध
एवोत्पत्तिरात्मलाभश्च कार्यस्येति चेत्, कथमलब्धात्मकं संबध्येतेति वक्त-
व्यम् । सतोर्हि द्वयोः संबन्धः संभवति न सदसतोरसतोर्वा । अभावस्य च
निरुपाख्यत्वात्प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नम् । सतां हि लोके क्षेत्र-
गृहादीनां मर्यादा दृष्टा नाभावस्य । नहि वन्ध्यापुत्रो राजा बभूव
प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो व-
न्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते । यदि च
वन्ध्यापुत्रोऽपि कारकव्यापारादूर्ध्वमभविष्यत्तत इदमप्युपापत्स्यत कार्या-
भावोऽपि कारकव्यापारादूर्ध्वं भविष्यतीति । वयं तु पश्यामो वन्ध्या-
पुत्रस्य कार्याभावस्य चाभावत्वाविशेषाद्यथा वन्ध्यापुत्रः कारकव्यापारा-

१ कार्याभावोऽसत्कार्यमित्यर्थ उपापत्स्यत उपपन्नमभविष्यदित्यन्वयः ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दूर्ध्वं न भविष्यत्येवं कार्याभावोऽपि कारकव्यापारादूर्ध्वं न तेन
तीति । नन्वेवं सति कारकव्यापारोऽनर्थकः प्रसज्येत । कार्य
प्राक्सिद्धत्वात्कारणस्वरूपसिद्धये न कश्चिद्व्याप्रियते । एवं प्रागेव
त्वात्तदनन्यत्वाच्च कार्यस्य स्वरूपसिद्धयेऽपि न कश्चिद्व्या
व्याप्रियते च । अतः कारकव्यापारार्थवत्त्वाय मन्यामहे प्रागसत्त्वम्
कार्यस्येति । नैष दोषः । यतः कार्याकारेण कारणं व्यवस्थापयतः कथ
कव्यापारस्यार्थवत्त्वमुपपद्यते । कार्याकारोऽपि कारणस्यात्मभूत एव
त्मभूतस्यानारभ्यत्वादित्यभाणि । नच विशेषदर्शनमात्रेण वस्तु
भवति । नहि देवदत्तः संकोचितहस्तपादः प्रसारितहस्तपादश्च यत
दृश्यमानोऽपि वस्त्वन्यत्वं गच्छति, स एवेति प्रत्यभिज्ञानात्
प्रतिदिनमनेकसंस्थानानामपि पित्रादीनां न वस्त्वन्यत्वं भवति
पिता मम भ्राता मम पुत्र इति प्रत्यभिज्ञानात् । जन्मोच्छेद
त्वात्तत्र युक्तं नान्यत्रेति चेत् । न । क्षीरादीनामपि दध्याद्या
नस्य प्रत्यक्षत्वात् । अदृश्यमानानामपि वटधानादीनां समान
यवान्तरोपचितानामङ्कुरादिभावेन दर्शनगोचरतापत्तौ जन्मसंज्ञा
मेवावयवानामपचयवशाददर्शनापत्तावुच्छेदसंज्ञा । तत्रेदृग्जन्मो
रितत्वाच्चेदसतः सत्त्वापत्तिस्तथा सति गर्भवासिन उत्तान
भेदप्रसङ्गः । तथाच बाल्ययौवनस्थाविरेष्वपि भेदप्रसङ्गः, पित्रादि
हारलोपप्रसङ्गश्च । एतेन क्षणभङ्गवादः प्रतिवदितव्यः । यस्य पुन
त्पत्तेरसत्कार्यं तस्य निर्विषयः कारकव्यापारः स्यात् । अभावस्य
त्वानुपपत्तेराकाशहननप्रयोजनखड्गाद्यनेकायुधप्रयुक्तिवत् । सम
रणविषयः कारकव्यापारः स्यादिति चेत् । न । अन्यविषयेण
व्यापारेणान्यनिष्पत्तेरतिप्रसङ्गात् । समवायिकारणस्यैवात्मातिशय
मिति चेत् । न । सत्कार्यतापत्तेः । तस्मात्क्षीरादीन्येव द्रव्याणि
दिभावेनावतिष्ठमानानि कार्याख्यां लभन्त इति न कारण
वर्षशतेनापि शक्यं निश्चेतुम् । तथा मूलकारणमेवान्त्य

१ वस्त्वन्यत्वं परमार्थतो भिन्नत्वम् । २ एतेन कारणस्य सर्वकार्येष्वन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तेन कार्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते । एवं युक्तेः कार्यस्य प्रागुत्पत्तेः सत्त्वमनन्यत्वं च कारणादवगम्यते । शब्दान्तराच्चैतदवगम्यते । पूर्वसूत्रेऽसद्व्यपदेशिनः शब्दस्योदाहृतत्वात्ततोऽन्यः सद्व्यपदेशी शब्दः शब्दान्तरम्—'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इत्यादि । 'तद्धैक आहुरसदेवेदमग्र आसीत्' इति चासत्पक्षमुपक्षिप्य 'कथमसतः सज्जायेत' इत्याक्षिप्य 'सदेव सोम्येदमग्र आसीत्' (छा० ६।२।१) इत्यवधारयति । तत्रेदंशब्दवाच्यस्य कार्यस्य प्रागुत्पत्तेः सच्छब्दवाच्येन कारणेन सामानाधिकरण्यस्य श्रूयमाणत्वात्सत्त्वानन्यत्वे प्रसिध्यतः । यदि तु प्रागुत्पत्तेरसत्कार्यं स्यात्पश्चाचोत्पद्यमानं कारणे समवेतं स्यात्तदान्यत्कारणात्स्यात् । तत्र 'येनाश्रुतं श्रुतं भवति' (छा० ६।१।३) इतीयं प्रतिज्ञा पीड्येत । सत्त्वानन्यत्वावगतेस्त्वियं प्रतिज्ञा समर्थ्यते ॥ १८ ॥

## पटवच्च ॥ १९ ॥

यथा च संवेष्टितः पटो न व्यक्तं गृह्यते किमयं पटः किं वान्यद्द्रव्यमिति । स एव प्रसारितो यत्संवेष्टितं द्रव्यं तत्पट एवेति प्रसारणेनाभिव्यक्तो गृह्यते । यथाच संवेष्टनसमये पट इति गृह्यमाणोऽपि न विशिष्टायामविस्तारो गृह्यते स एव प्रसारणसमये विशिष्टायामविस्तारो गृह्यते न संवेष्टितरूपादन्योऽयं भिन्नः पट इति । एवं तन्त्वादिकारणावस्थं पटादिकार्यमस्पष्टं सत् तुरीवेमकुविन्दादिकारकव्यापारादिभिर्व्यक्तं स्पष्टं गृह्यते । अतः संवेष्टितप्रसारितपटन्यायेनैवानन्यत्कारणात्कार्यमित्यर्थः १९

## यथा च प्राणादि ॥ २० ॥

यथा च लोके प्राणापानादिषु प्राणभेदेषु प्राणायामेन निरुद्धेषु कारणमात्रेण रूपेण वर्तमानेषु जीवनमात्रं कार्यं निर्वर्त्यते नाकुञ्चनप्रसारणादिकं कार्यान्तरम् । तेष्वेव प्राणभेदेषु पुनः प्रवृत्तेषु जीवनादधिकमाकुञ्चनप्रसारणादिकमपि कार्यान्तरं निर्वर्त्यते । नच प्राणभेदानां प्रभेदवतः प्राणादन्यत्वं, समीरणस्वभावाविशेषात् । एवं कार्यस्य कारणादनन्यत्वम् ।

---

१ निवर्तवादं व्यक्तीकर्तुं नटवदित्युदाहरणम् । २ आयामो दैर्घ्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अतश्च कृत्स्नस्य जगतो ब्रह्मकार्यत्वात्तदनन्यत्वाच्च सिद्धै
प्रतिज्ञा 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति
६।१।१ ) इति ॥ २० ॥

## ७ इतरव्यपदेशाधिकरणम् । सू० २१–२३

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥

अन्यथा पुनश्चेतनकारणवाद आक्षिप्यते । चेतनाद्धि ज
यामाश्रीयमाणायां हिताकरणादयो दोषाः प्रसज्यन्ते । कुतः
व्यपदेशात् । इतरस्य शारीरस्य ब्रह्मात्मत्वं व्यपदिशति श्रु
आत्मा तत्त्वमसि श्वेतकेतो' (छा० ६।८।७) इति प्रतिबोधना
इतरस्य च ब्रह्मणः शारीरात्मत्वं व्यपदिशति 'तत्सृष्ट्वा तदे
शत्' (तै० २।६) इति स्रष्टुरेवाविकृतस्य ब्रह्मणः कार्यानुप्रवे
रात्मत्वप्रदर्शनात् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे
वाणि' (छा० ६।३।२) इति च परा देवता जीवमात्मशब्देन
शन्ती न ब्रह्मणो भिन्नः शारीर इति दर्शयति । तस्माद्यद्ब्र
तच्छारीरस्यैवेति । अतः स स्वतन्त्रः कर्ता सन् हि
सौमनस्यकरं कुर्यान्नाहितं जन्ममरणजरारोगाद्यनेकानर्थजाल
कश्चिदपरतन्त्रो बन्धनागारमात्मनः कृत्वानुप्रविशति । न च
निर्मलः सन्नत्यन्तमलिनं देहमात्मत्वेनोपेयात् । कृतमपि कथंचि
तदिच्छया जह्यात् । सुखकरं चोपाददीत । स्मरेच्च मयेदं
विचित्रं विरचितमिति । सर्वो हि लोकः स्पष्टं कार्यं कृत्वा स्म
कृतमिति । यथा च मायावी स्वयं प्रसारितां मायामिच्छयाना
पसंहरति, एवं शारीरोऽपीमां सृष्टिमुपसंहरेत् । स्वमपि
शारीरो न शक्नोत्यनायासेनोपसंहर्तुम् । एवं हितक्रियाद्यदर्श
चेतनाज्जगत्प्रक्रियेति गम्यते ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

तुशब्दः पक्षं व्यावर्तयति । यत्सर्वज्ञं सर्वशक्ति ब्रह्म नित्य
कस्वभावं शारीरादधिकमन्यत्, तद्वयं जगतः स्रष्टृ ब्रूमः । न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ताकरणादयो दोषाः प्रसज्यन्ते । नहि तस्य हितं किंचित्कर्तव्यमस्त्य-हितं वा परिहर्तव्यं, नित्यमुक्तस्वभावत्वात् । नच तस्य ज्ञानप्रतिबन्धः शक्तिप्रतिबन्धो वा क्वचिदप्यस्ति, सर्वज्ञत्वात्सर्वशक्तित्वाच्च । शारीर-स्त्वनेवंविधस्तस्मिन्प्रसज्यन्ते हिताकरणादयो दोषाः । नतु तं वयं जगतः स्रष्टारं ब्रूमः । कुत एतत् । भेदनिर्देशात् । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० २।४।५), 'सोऽन्वेष्टव्यः स विजिज्ञासि-तव्यः'(छा० ८।७।१), 'सता सोम्य तदा संपन्नो भवति'(छा० ६।८।१), शारीर आत्मा प्राज्ञेनात्मनान्वारूढः' (बृ० ४।३।३५) इत्येवंजातीयकः कर्तृकर्मादिभेदनिर्देशो जीवादधिकं ब्रह्म दर्शयति । नन्वभेदनिर्देशोऽपि दर्शितः 'तत्त्वमसि' इत्येवंजातीयकः । कथं भेदाभेदौ विरुद्धौ संभवेया-ताम् । नैष दोषः । आकाशघटाकाशन्यायेनोभयसंभवस्य तत्र तत्र प्रतिष्ठा-पितत्वात् । अपिच यदा तत्त्वमसीत्येवंजातीयकेनाभेदनिर्देशेनाभेदः प्रति-बोधितो भवत्यपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वं, समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधि-तत्वात् । तत्र कुत एव सृष्टिः कुतो वा हिताकरणादयो दोषाः । अवि-द्याप्रत्युपस्थापितनामरूपकृतकार्यकरणसंघातोपाध्यविवेककृता हि भ्रा-न्तिर्हिताकरणादिलक्षणः संसारो नतु परमार्थतोऽस्तीत्यसकृदवोचाम । जन्ममरणच्छेदनभेदनाद्यभिमानवत् । अबाधिते तु भेदव्यवहारे 'सो-ऽन्वेष्टव्यः स विजिज्ञासितव्यः' इत्येवंजातीयकेन भेदनिर्देशेनावगम्यमानं ब्रह्मणोऽधिकत्वं हिताकरणादिदोषप्रसक्तिं निरुणद्धि ॥ २२ ॥

**अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥**

यथा च लोके पृथिवीत्वसामान्यान्वितानामप्यश्मनां केचिन्महार्हा मणयो वज्रवैडूर्यादयोऽन्ये मध्यमवीर्याः सूर्यकान्तादयोऽन्ये प्रहीणाः श्ववायसप्रक्षेपणार्हाः पाषाणा इत्यनेकविधं वैचित्र्यं दृश्यते । यथा चैक-पृथिवीव्यपाश्रयाणामपि बीजानां बहुविधं पत्रपुष्पफलगन्धरसादिवैचित्र्यं चन्दनकिंपाकादिषूपलक्ष्यते । यथा चैकस्याप्यन्नरसस्य लोहितादीनि

१ किंपाको महातालफलम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

केशलोमादीनि च विचित्राणि कार्याणि भवन्ति । एवमेकस्यापि जीवप्राज्ञपृथक्त्वं कार्यवैचित्र्यं चोपपद्यत इत्यतस्तदनुपपत्तिः कल्पितदोषानुपपत्तिरित्यर्थः । श्रुतेश्च प्रामाण्याद्विकारस्य च णमात्रत्वात्स्वप्नदृश्यभाववैचित्र्यवच्चेत्यभ्युच्चयः ॥ २३ ॥

## ८ उपसंहारदर्शनाधिकरणम् । सू० २४–२५

### उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥

चेतनं ब्रह्मैकमद्वितीयं जगतः कारणमिति यदुक्तं तन्नोपपद्यते स्मात् । उपसंहारदर्शनात् । इह हि लोके कुलालादयो घटादीनां कर्तारो मृद्दण्डचक्रसूत्राद्यनेककारकोपसंहारेण संगृहीतसाधनाः सन्तस्तत्कार्यं कुर्वाणा दृश्यन्ते । ब्रह्म चासहायं तवाभिप्रेतं तस्य साधनान्तरानुपसंग्रहे सति कथं स्रष्टृत्वमुपपद्येत । तस्मान्न ब्रह्म जगत्कारणमिति चेत् । नैष दोषः । यतः क्षीरवद्द्रव्यस्वभावविशेषादुपपद्यते । यथा हि लोके क्षीरं जलं वा स्वयमेव दधिहिमभावेन परिणमतेऽनपेक्ष्य बाह्यं साधनं तथेहापि भविष्यति । ननु क्षीराद्यपि दध्यादिभावेन परिणममानमपेक्षत एव बाह्यं साधनमौष्ण्यादिकं कथमुच्यते क्षीरवद्धीति । नैष दोषः । स्वयमपि हि क्षीरं यां च यावतीं च परिणाममात्रामनुभवति तावत्येव त्वार्यते त्वौष्ण्यादिना दधिभावाय । यदि च स्वयं दधिभावशीलता न स्यान्नैवौष्ण्यादिनापि बलाद्दधिभावमापद्येत । नहि वायुराकाशो वौष्ण्यादिना बलाद्दधिभावमापद्यते । साधनसामग्र्या च तस्य पूर्णता संपाद्यते । परिपूर्णशक्तिकं तु ब्रह्म । न तस्यान्येन केनचित्पूर्णता संपादयितव्या । श्रुतिश्च भवति—'न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥' (श्वे० ६।२) इति । तस्मादेकस्यापि ब्रह्मणो विचित्रशक्तियोगात्क्षीरादिवद्विचित्रपरिणाम उपपद्यते ॥ २४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## देवादिवदपि लोके[1] ॥ २५ ॥

स्यादेतत् । उपपद्यते क्षीरादीनामचेतनानामनपेक्ष्यापि बाह्यं साधनं दध्यादिभावः, दृष्टत्वात् । चेतनाः पुनः कुलालादयः साधनसामग्रीमपेक्ष्यैव तस्मै तस्मै कार्याय प्रवर्तमाना दृश्यन्ते । कथं ब्रह्म चेतनं सदसहायं प्रवर्तेतेति । देवादिवदिति ब्रूमः । यथा लोके देवाः पितर ऋपय इत्येवमादयो महाप्रभावाश्चेतना अपि सन्तोऽनपेक्ष्यैव किंचिद्बाह्यं साधनमैश्वर्यविशेपयोगादभिध्यानमात्रेण[2] स्वत एव बहूनि नानासंस्थानानि शरीराणि प्रासादादीनि च रथादीनि च निर्मिमाणा उपलभ्यन्ते मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् । तन्तुनाभश्च स्वत एव तन्तून्सृजति । बलाका चान्तरेणैव शुक्रं गर्भं धत्ते । पद्मिनी चानपेक्ष्य किंचित्प्रस्थानसाधनं सरोन्तरात्सरोन्तरं प्रतिष्ठते । एवं चेतनमपि ब्रह्मानपेक्ष्य बाह्यं साधनं स्वत एव जगत्स्रक्ष्यति । स यदि ब्रूयाद्य एते देवादयो ब्रह्मणो दृष्टान्ता उपात्तास्ते दार्ष्टान्तिकेन ब्रह्मणा न समाना भवन्ति । शरीरमेव ह्यचेतनं देवादीनां शरीरान्तरादिविभूत्युत्पादन उपादानं नतु चेतन आत्मा । तन्तुनाभस्य च क्षुद्रतरजन्तुभक्षणाल्लाला कठिनतामापद्यमाना तन्तुर्भवति । बलाका च स्तनयित्नुरवश्रवणाद्गर्भं धत्ते । पद्मिनी च चेतनप्रयुक्ता सत्यचेतनेनैव शरीरेण सरोन्तरात्सरोन्तरमुपसर्पति वल्लीव वृक्षं, नतु स्वयमेवाचेतना सरोन्तरोपसर्पणे व्याप्रियते । तस्मान्नैते ब्रह्मणो दृष्टान्ता इति । तं प्रति ब्रूयान्नायं दोपः । कुलालादिदृष्टान्तवैलक्षण्यमात्रस्य विवक्षितत्वादिति । यथा हि कुलालादीनां देवादीनां च समाने चेतनत्वे कुलालादयः कार्यारम्भे बाह्यं साधनमपेक्षन्ते न देवादयः, तथा ब्रह्म चेतनमपि न बाह्यं साधनमपेक्षिष्यत इत्येतावद्वयं देवाद्युदाहरणेन विवक्ष्यामः । तस्माद्यथैकस्य सामर्थ्यं दृष्टं तथा सर्वेपामेव भवितुमर्हतीति नास्त्येकान्त इत्यभिप्रायः ॥ २५ ॥

---

१ लोक्यते ज्ञायतेऽर्थोऽनेनेति लोको मन्त्रार्थवादादिशास्त्रं वृद्धव्यवहारश्च । २ अभिध्यानं संकल्पः । ३ यथा भारते श्रीकृष्णस्य संकल्पमात्रेण द्रौपद्याः पटपरम्परोत्पत्तिः तथा असहायस्यापि ब्रह्मणः कारणत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ९ कृत्स्नप्रसक्त्यधिकरणम् । सू० २६–२९

### कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

चेतनमेकमद्वितीयं ब्रह्म क्षीरादिवद्देवादिवच्चानपेक्ष्य बाह्यसा
परिणममानं जगतः कारणमिति स्थितम्। शास्त्रार्थपरिशुद्धये तु
पति । कृत्स्नप्रसक्तिः कृत्स्नस्य ब्रह्मणः कार्यरूपेण परिणामः
निरवयवत्वात् । यदि ब्रह्म पृथिव्यादिवत्सावयवमभविष्यत्ततो
पर्येणंस्यदेकदेशश्चावास्थास्यत् । निरवयवं तु ब्रह्म श्रुतिभ्योऽव
'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' (श्वे० ६।१९),
ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मु० २।१।२), 'इदं म
न्तमपारं विज्ञानघन एव' (बृ० २।४।१२), 'स एष नेति
(बृ० ३।९।२६), 'अस्थूलमनणु' (बृ० ३।८।८) इत्याद्या
विशेषप्रतिषेधिनीभ्यः । ततश्चैकदेशपरिणामासंभवात्कृत्स्नपरि
सत्यां मूलोच्छेदः प्रसज्येत । द्रष्टव्यतोपदेशानर्थक्यं चापन्नम
त्कार्यस्य, तद्व्यतिरिक्तस्य च ब्रह्मणोऽसंभवात् अजत्वादि
अथैतद्दोषपरिजिहीर्षया सावयवमेव ब्रह्माभ्युपगम्येत तथापि
यवत्वस्य प्रतिपादकाः शब्दा उदाहृतास्ते प्रकुप्येयुः । सावय
त्यत्वप्रसङ्ग इति। सर्वथायं पक्षो न घटयितुं शक्यत इत्याक्षिप

### श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्देनाक्षेपं परिहरति । न खल्वस्मत्पक्षे कश्चिदपि दोषो
तावत्कृत्स्नप्रसक्तिरस्ति । कुतः । श्रुतेः । यथैव हि ब्रह्मणो
श्रूयत एवं विकारव्यतिरेकेणापि ब्रह्मणोऽवस्थानं श्रूयते,
योर्भेदेन व्यपदेशात् 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देव
जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ )
'तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य
त्रिपादस्यामृतं दिवि' ( छा० ३।१२।६ ) इति चैवंजातीय
हृदयायतनत्ववचनात्सत्संपत्तिवचनाच्च । यदि च कृत्स्नं ब्रह्म

[illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नोपयुक्तं स्यात् 'सता सोम्य तदा संपन्नो भवति' (छा० ६।८।१) इति सुषुप्तिगतं विशेषणमनुपपन्नं स्यात्। विकृतेन ब्रह्मणा नित्यसंपन्नत्वादविकृतस्य च ब्रह्मणोऽभावात्। तथेन्द्रियगोचरत्वप्रतिषेधाद्ब्रह्मणो विकारस्य चेन्द्रियगोचरत्वोपपत्तेः। तस्मादस्त्यविकृतं ब्रह्म। नच निरवयवत्वशब्दकोपोऽस्ति, श्रूयमाणत्वादेव निरवयवत्वस्याप्यभ्युपगम्यमानत्वात्। शब्दमूलं च ब्रह्म शब्दप्रमाणकं नेन्द्रियादिप्रमाणकं तद्यथाशब्दमभ्युपगन्तव्यम्। शब्दश्चोभयमपि ब्रह्मणः प्रतिपादयत्यकृत्स्नप्रसक्तिं निरवयवत्वं च। लौकिकानामपि मणिमन्त्रौषधिप्रभृतीनां देशकालनिमित्तवैचित्र्यवशाच्छक्तयो विरुद्धानेककार्यविषया दृश्यन्ते। ता अपि तावन्नोपदेशमन्तरेण केवलेन तर्केणावगन्तुं शक्यन्तेऽस्य वस्तुन एतावत्य एतत्सहाया एतद्विषया एतत्प्रयोजनाश्च शक्तय इति। किमुताचिन्त्यस्वभावस्य ब्रह्मणो रूपं विना शब्देन न निरूप्येत। तथाचाहुः पौराणिकाः—'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत्। प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम्॥' इति। तस्माच्छब्दमूल एवातीन्द्रियार्थयाथात्म्याधिगमः। ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुं निरवयवं च ब्रह्म परिणमते नच कृत्स्नमिति। यदि निरवयवं ब्रह्म स्यान्नैव परिणमेत। कृत्स्नमेव वा परिणमेत। अथ केनचिद्रूपेण परिणमेत केनचिच्चावतिष्ठेतेति रूपभेदकल्पनात्सावयवमेव प्रसज्येत। क्रियाविषये हि 'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्येवंजातीयकायां विरोधप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति पुरुषतन्त्रत्वाच्चानुष्ठानस्य। इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः संभवत्यपुरुषतन्त्रत्वाद्वस्तुनः तस्माद्दुर्घटमेतदिति। नैष दोषः। अविद्याकल्पितरूपभेदाभ्युपगमात्। नह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु संपद्यते। नहि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति। अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते। पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वाचारम्भणमात्रत्वाच्चाविद्याकल्पितस्य नामरूपभेदस्येति न
ब्रह्मणः कुप्यति । नचेयं परिणामश्रुतिः परिणामप्रतिपादनार्था,
फलानवगमात् । सर्वव्यवहारहीनब्रह्मात्मभावप्रतिपादनार्था
फलावगमात् । 'स एष नेति नेत्यात्मा' इत्युपक्रम्याह—
जनक प्राप्तोऽसि' ( बृ० ४।२।४ ) इति । तस्मादस्मत्पक्षे न
दोषप्रसङ्गोऽस्ति ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

अपिच नैवात्र विवदितव्यं कथमेकस्मिन्ब्रह्मणि स्वरूपानुपम
कारा सृष्टिः स्यादिति । यत आत्मन्यप्येकस्मिन्स्वप्रदृशि स्वरूपा
नेकाकारा सृष्टिः पठ्यते'—न तत्र रथा न रथयोगा न पन्थानो
रथान्रथयोगान्पथः सृजते'(बृ० ४।३।१०) इत्यादिना । लोके
मायाव्यादिषु च स्वरूपानुपमर्देनैव विचित्रा हस्त्यश्वादिसृष्टयो
तथैकस्मिन्नपि ब्रह्मणि स्वरूपानुपमर्देनैवानेकाकारा सृष्टिर्भविष्य

## स्वपक्षदोषाच्च ॥ २९ ॥

परेषामप्येष समानः स्वपक्षे दोषः । प्रधानवादिनोऽपि हि
मपरिच्छिन्नं शब्दादिहीनं प्रधानं सावयवस्य परिच्छिन्नस्य
कार्यस्य कारणमिति स्वपक्षः । तत्रापि कृत्स्नप्रसक्तिर्निरव
नस्य प्राप्नोति निरवयवत्वाभ्युपगमकोपो वा । ननु नैव
प्रधानमभ्युपगम्यते, सत्त्वरजस्तमांसि त्रयो गुणा नित्यास्
वस्था प्रधानं तैरेवावयवैस्तत्सावयवमिति । नैवंजातीयकेन
त्वेन प्रकृतो दोषः परिहर्तुं पार्यते । यतः सत्त्वरजस्तम
समानं निरवयवत्वम् । एकैकमेव चेतरद्वयानुगृहीतं सजाती
स्योपादानमिति समानत्वात्स्वपक्षदोषप्रसङ्गस्य । तर्काप्रतिष्ठा
त्वमेवेति चेत् । एवमप्यनित्यत्वादिदोषप्रसङ्गः । अथ शक्त
वैचित्र्यसूचिता अवयवा इत्यभिप्रायः । तास्तु ब्रह्मवादिनो
तथाणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्य

१ वैशेषिकाणां ह्यणुभ्यां संयुज्य द्व्यणुकमेकमारभ्यते, तैस्त्रिभिर्द्व्यणुकै
भ्यत इति प्रक्रिया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संयुज्येत ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः । अथैकदेशेन संयुज्येत तथापि निरवयवत्वाभ्युपगमकोप इति स्वपक्षेऽपि समान एष दोषः । समानत्वाच्च नान्यतरस्मिन्नेव पक्ष उपक्षेप्तव्यो भवति । परिहृतस्तु ब्रह्म-वादिना स्वपक्षे दोषः ॥ २९ ॥

१० सर्वोपेताधिकरणम् । सू० ३०-३१

सर्वोपेता च तद्दर्शनात् ॥ ३० ॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते विचित्रो विकारप्रपञ्च इत्युक्तम् । तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति । तदुच्यते । सर्वोपेता च तद्दर्शनात् । सर्वशक्तियुक्ता च परा देवते-त्यभ्युपगन्तव्यम् । कुतः । तद्दर्शनात् । यथाहि दर्शयति श्रुतिः सर्व-शक्तियोगं परस्या देवतायाः—'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः' (छा० ३।१४।४), 'सत्यकामः सत्यसं-कल्पः' (छा० ८।७।१), 'यः सर्वज्ञः सर्ववित्' (मुण्ड० १।१।९), 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ० ३।८।९) इत्येवंजातीयका ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

स्यादेतत् विकरणां परां देवतां शास्ति शास्त्रम्—'अचक्षुष्कमश्रोत्रमवा-गमनाः' ( बृ० ३।८।८ ) इत्येवंजातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत् । देवादयो हि चेतनाः सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसंपन्ना एव तस्मैतस्मै कार्याय प्रभवन्तो विज्ञायन्ते । किंच 'नेति नेति' (बृ० ३।९।२६) इति प्रतिषिद्धसर्वविशेषाया देवतायाः सर्वशक्तियोगः संभवेदिति चेत् । यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम् । श्रुत्य-वगाह्यमेवेदमतिगम्भीरं ब्रह्म न तर्कावगाह्यम् । नच यथैकस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति । प्रतिषि-द्धसर्वविशेषस्यापि ब्रह्मणः सर्वशक्तियोगः संभवतीत्येतदप्यविद्याकल्पित-रूपभेदोपन्यासेनोक्तमेव । तथाच शास्त्रम्—'अपाणिपादो जवनो

१ अभ्यात्तः अभितोव्याप्तः । अवाकी वागिन्द्रियशून्यः । अनादरो निष्कामः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' (श्वे० ३।१९) इत्युक्तं
ब्रह्मणः सर्वसामर्थ्ययोगं दर्शयति ॥ ३१ ॥

## ११ प्रयोजनवत्त्वाधिकरणम् । सू० ३२-३३

## न प्रयोजनवत्त्वात् ॥ ३२ ॥

अन्यथा पुनश्चेतनकर्तृत्वं जगत आक्षिपति। न खलु चेतनः
जगद्बिम्बं विरचयितुमर्हति । कुतः । प्रयोजनवत्त्वात्प्रवृत्तीनाम्
हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि
त्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः । किमुत गुरुतर
भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः—'न वा अरे सर्व
सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति' (बृ० २।४
गुरुतरसंरम्भा चेयं प्रवृत्तिर्यदुच्चावचप्रपञ्चं जगद्बिम्बं विरच
यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगि
ल्प्येत परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत । प्रयोजनाभ
त्त्यभावोऽपि स्यात् । अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराध
त्मप्रयोजनं प्रवर्तमानो दृष्टस्तथा परमात्मापि प्रवर्तिष्यत
तथा सति सर्वज्ञत्वं परमात्मनः श्रूयमाणं बाध्येत ।
चेतनात्सृष्टिरिति ॥ ३२ ॥

## लोकवत्तु लीलाकैवल्यम् ॥ ३३ ॥

तुशब्देनाक्षेपं परिहरति । यथा लोके कस्यचिदाप्तैपणस्य
रिक्तं किंचित्प्रयोजनमभिसंधाय केवलं लीलारूपाः प्रवृत्तयः
रेषु भवन्ति, यथा चोच्छ्वासप्रश्वासादयोऽनभिसंधाय बाह्य
जनं स्वभावादेव संभवन्ति एवमीश्वरस्याप्यनपेक्ष्य किंचित्
स्वभावादेव केवलं लीलारूपा प्रवृत्तिर्भविष्यति । नहीश्वर
नान्तरं निरूप्यमाणं न्यायतः श्रुतितो वा संभवति। न च स्व

---

१ बुद्ध्यपराधो विवेकाभावः । २ व्यतिरिक्तं लीलायाः सकाशादिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

[व]क्तुं शक्यते । यद्यप्यस्माकमियं जगद्बिम्बविरचना गुरुतरसंरम्भेवाभाति [त]थापि परमेश्वरस्य लीलैव केवलेयं, अपरिमितशक्तित्वात् । यदि नाम [लो]के लीलास्वपि किंचित्सूक्ष्मं प्रयोजनमुत्प्रेक्ष्येत तथापि नैवात्र किंचि-[त्प्र]योजनमुत्प्रेक्षितुं शक्यते, आप्तकामश्रुतेः । नाप्यप्रवृत्तिरुन्मत्तप्रवृत्तिर्वा, [सृ]ष्टिश्रुतेः, सर्वज्ञश्रुतेश्च । नचेयं परमार्थविषया सृष्टिश्रुतिः, अविद्या-[क]ल्पितनामरूपव्यवहारगोचरत्वात्, ब्रह्मात्मभावप्रतिपादनपरत्वाच्चेत्येत-[द]पि नैव विस्मर्तव्यम् ॥ ३३ ॥

## १२ वैषम्यनैर्घृण्याधिकरणम् । सू० ३४–३६

**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥**

[पु]नश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखननन्यायेन [प्रति]ज्ञातस्यार्थस्य दृढीकरणाय । नेश्वरो जगतः कारणमुपपद्यते । कुतः । [वैष]म्यनैर्घृण्यप्रसङ्गात् । कांश्चिदत्यन्तसुखभाजः करोति देवादीन्, कांश्चि-[दत्य]न्तदुःखभाजः पश्वादीन्, कांश्चिन्मध्यमभोगभाजो मनुष्यादीनित्येवं [वि]षमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः । श्रुतिस्मृ-[त्यव]धारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत । तथा खलजनैरपि [जु]गुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहाराच्च [प्र]सज्येत । तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमित्येवं प्राप्ते ब्रूमः—[वैष]म्यनैर्घृण्ये नेश्वरस्य प्रसज्येते । कस्मात् । सापेक्षत्वात् । यदि हि [निर]पेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते स्यातामेतौ दोषौ वैषम्यं [नैर्घृ]ण्यं च । नतु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां [सृ]ष्टिं निर्मिमीते । किमपेक्षत इति चेत् । धर्माधर्मावपेक्षत इति वदामः । [अत]ः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । [ईश्व]रस्तु पर्जन्यवद्द्रष्टव्यः । यथाहि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं [का]रणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि [सा]मर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं

---

१ सृष्टिश्रुतेरप्रवृत्तिर्नास्ति, सर्वज्ञत्वश्रुतेरुन्मत्तता नास्तीति विभागः । २ पृथग्जनः [पाम]रः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारणं भवति । देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवा- कर्माणि कारणानि भवन्त्येवमीश्वरः सापेक्षत्वान्न वैषम्य- दुष्यति । कथं पुनरवगम्यते सापेक्ष ईश्वरो नीचमध्यमो- निर्मिमीत इति । तथाहि दर्शयति श्रुतिः—'एष ह्येव साधु यति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु तं यमधो निनीषते' ( कौ० ब्रा० ३।८ ) इति । 'पुण्यो वै पुण्ये- भवति पापः पापेन' ( बृ० ३।२।१३ ) इति च । स्मृतिरपि- शेषापेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति—'ये- प्रपद्यन्ते तांस्तथैव भजाम्यहम्' ( भ० गी० ४।११ ) इत्येवंजा-

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३५ ॥

'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६। प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म यदपेक्ष्य विषमा सृष्टिः स्या- त्तरकालं हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादि- तरेतराश्रयत्वं प्रसज्येत । अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्र- प्राग्विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः चेत् । नैष दोषः । अनादित्वात्संसारस्य । भवेदेष दोषो यद्यादि- स्यात् । अनादौ तु संसारे बीजाङ्कुरवद्धेतुमद्भावेन कर्मणः च प्रवृत्तिर्न विरुध्यते ॥ ३५ ॥

कथं पुनरवगम्यतेऽनादिरेष संसार इति । अत उत्तरं पठ-

## उपपद्यते चाप्युपलभ्यते च ॥ ३६ ॥

उपपद्यते च संसारस्यानादित्वम् । आदिमत्त्वे हि संसारस्य तेर्मुक्तानामपि पुनः संसारोद्भूतिप्रसङ्गः, अकृताभ्यागमप्रसङ्गः दुःखादिवैषम्यस्य निर्निमित्तत्वात् । नचेश्वरो वैषम्यहेतुरित्यु- विद्या केवला वैषम्यस्य कारणं, एकरूपत्वात् । रागादिक्लेश-

१ यं जनमुन्निनीषते ... साधु कारयत्येष ईश्वर इ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

र्मापेक्षा त्वविद्या वैषम्यकरी स्यात् । नच कर्मान्तरेण शरीरं संभवति, नच रीरमन्तरेण कर्म संभवतीतीतरेतराश्रयत्वप्रसङ्गः । अनादित्वे तु बीजाङ्कु- न्यायेनोपपत्तेर्न कश्चिद्दोषो भवति । उपलभ्यते च संसारस्यानादित्वं श्रुति- त्योः । श्रुतौ तावत् 'अनेन जीवेनात्मना' ( छा० ६।३।२ )इति स्वर्गप्रमुखे रीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिः संसार इति र्शयति । आदिमत्त्वे तु प्रागनवधारितप्राणः सन् कथं प्राणधारणनिमि- न जीवशब्देन सर्गप्रमुखेऽभिलप्येत । नच धारयिष्यतीत्यतोऽभिलप्येत । नागताद्धि संबन्धादतीतः संबन्धो बलवान्भवति, अभिनिष्पन्नत्वात् । र्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' ( ऋ० सं० १०।१९०।३ ) ते च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति । स्मृतावप्यनादित्वं संसार- पलभ्यते—'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्र- ष्ठा' ( गी० १५।३ ) इति । पुराणे चातीतानागतानां च कल्पानां न रेमाणमस्तीति स्थापितम् ॥ ३६ ॥

## १३ सर्वधर्मोपपत्त्यधिकरणम् । सू० ३७

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षि- न्विलक्षणत्वादीन्दोषान्पर्यहार्षीदाचार्यः । इदानीं परपक्षप्रतिषेधप्रधानं करणं प्रारिप्समाणः स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति । यस्माद- न्ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा पद्यन्ते 'सर्वज्ञं सर्वशक्ति महामायं च ब्रह्म' इति, तस्मादनतिशङ्कनी- मेदमौपनिषदं दर्शनमिति ॥ ३७ ॥ इति श्रीगोविन्दभगवत्पूज्यपाद- ष्यशंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य थमः पादः समाप्तः ॥ १ ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वितीयाध्याये द्वितीयः पादः ।

[ अत्र पादे सांख्यादिमतानां दुष्टत्वप्रदर्शनम् । ]

## १ रचनानुपपत्त्यधिकरणम् । सू० १–१०

### रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥

यद्यपीदं वेदान्तवाक्यानामैदंपर्यं निरूपयितुं शास्त्रं प्रवृत्तं
शास्त्रवत्केवलाभिर्युक्तिभिः कंचित्सिद्धान्तं साधयितुं दूषयितुं
तथापि वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि
दिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते ।
निर्णयस्य च सम्यग्दर्शनार्थत्वात्तन्निर्णयेन स्वपक्षस्थापनं प्र
तद्ध्यभ्यर्हितं परपक्षप्रत्याख्यानादिति । ननु मुमुक्षूणां मोक्ष
सम्यग्दर्शननिरूपणाय स्वपक्षस्थापनमेव केवलं कर्तुं युक्तं किं
राकरणेन परद्वेषकरेण । बाढमेवम् । तथापि महाजनप
महान्ति सांख्यादितन्त्राणि सम्यग्दर्शनापदेशेन[1] प्रवृत्तान्युपलभ्य
चिन्मन्दमतीनामेतान्यपि सम्यग्दर्शनायोपादेयानीत्यपेक्षा । त
ढत्वसंभवेन सर्वज्ञभाषितत्वाच्च श्रद्धा च तेषु । इत्यतस्तदसारतो
प्रयत्यते । ननु 'ईक्षतेर्नाशब्दम्' ( ब्र० सू० १।१।५ ), 'कामा
नापेक्षा' ( ब्र० सू० १।१।१८ ) 'एतेन सर्वे व्याख्याता व्याख्या
सू० १।४।२८ ) इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः
कृतकरणेनेति । तदुच्यते—सांख्यादयः स्वपक्षस्थापनाय वेदा
न्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते, तेषां
तद्व्याख्यानाभासं न सम्यग्व्याख्यानमित्येतावत्पूर्वं कृतम् । इह
निरपेक्षः स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः । त
मन्यन्ते—यथा घटशरावादयो भेदा मृदात्मनान्वीयमाना
त्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मि
सुखदुःखमोहात्मतयान्वीयमानाः सुखदुःखमोहात्मकसामान्य

१ अपदेशेन व्याजेन ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangot

तुमर्हन्ति । यत्तत्सुखदुःखमोहात्मकं सामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना विवर्तत इति । तथा परिमाणादिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते । त्र वदामः—यदि दृष्टान्तबलेनैवैतन्निरूप्येत, नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किंचिद्विशिष्टपुरुषार्थनिर्वर्तनसमर्थान्विकारान्विरचयद्दृष्टम् । गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते । तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभावितत्तमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेत् । लोष्टपाषाणादिष्वदृष्टत्वात् । मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते तद्वत्प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः । नच मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं न बाह्यकुम्भकारादिव्यपाश्रयेणेति किंचिन्नियामकमस्ति । नचैवं सति किंचिद्विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते चेतनकारणसमर्पणात् । अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति । अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति । नहि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयान्वय उपपद्यते, सुखादीनां चान्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेः । तन्निमित्तत्वप्रतीतेश्च । शब्दाद्यविशेषेऽपि च भावनाविशेषात्सुखादिविशेषोपलब्धेः । तथा परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात्संसर्गपूर्वकत्वमनुमिमानस्य सत्त्वरजस्तमसामपि संसर्गपूर्वकत्वप्रसङ्गः परिमितत्वाविशेषात् । कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां शयनासनादीनां दृष्ट इति न कार्यकारणभावाद्बाह्याध्यात्मिकानां भेदानामचेतनपूर्वकत्वं शक्यं कल्पयितुम् ॥ १ ॥

**प्रवृत्तेश्च ॥ २ ॥**

आस्तां तावदियं रचना । तत्सिद्ध्यर्था या प्रवृत्तिः साम्यावस्थानात्प्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च्युतिः सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिर्विशिष्टकार्याभि... चेत्, सापि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते, मृदादिष्वदर्शनात् तस्य च । नहि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः ... भिरश्वादिभिर्वानधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते ... दृष्टसिद्धिः । अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणं ... भवति । ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा । सत्यमेतत् । चेतनेनापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा । नत्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा । किं पुनरत्र युक्तम् । यस्मिन्प्रवृत्तिर्दृष्टा रथादौ यत्संप्रयुक्तस्य दृष्टा तस्य सेति । ननु यस्मिन्दृश्यते प्रवृत्तिस्तस्यान्त... युक्तमुभयोः प्रत्यक्षत्वात् । नतु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो ... प्रत्यक्षः । प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः ... चेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति । अतएव च ... सति दर्शनादसति चादर्शनाद्देहस्यैव चैतन्यमपीति लौकायतिक... पन्नाः । तस्मादचेतनस्यैव प्रवृत्तिरिति । तदभिधीयते—न ... अचेतने प्रवृत्तिर्दृश्यते न तस्य सेति । भवतु तस्यैव सा । सा तु ... नाद्भवतीति ब्रूमः । तद्भावे भावात्तदभावे चाभावात् । यथा ... पाश्रयापि दाहप्रकाशलक्षणा विक्रियानुपलभ्यमानापि च केवले ... ज्वलनादेव भवति, तत्संयोगे दर्शनात्तद्वियोगे चादर्शनात्तद्वत् ... तिकानामपि चेतन एव देहोऽचेतनानां रथादीनां प्रवर्तको ... प्रतिपिद्धं चेतनस्य प्रवर्तकत्वम् । ननु तव देहादिसंयुक्त... विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्तकत्वमिति चेत्, न । अयस्कान्तवद्रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः । यथा अयस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति, यथा वा रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति, एवं प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्च सन् सर्वं प्रवर्तयेदित्युपपन्नम् । एकत्वात्प्रवर्त्याभावे प्रवर्तकत्वानुपपत्ति...

१ उभयोः प्रवृत्तितदाश्रययोः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चेत्। न। अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत्प्रत्युक्तत्वात्। तस्मात्संभवति प्रवृत्तिः सर्वज्ञकारणत्वे नत्वचेतनकारणत्वे ॥ २ ॥

## पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

स्यादेतत्। यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथाच जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दत एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति। नैतत्साधूच्यते। यतस्तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे। उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात्। शास्त्रं च 'योऽप्सु तिष्ठन् योऽपोऽन्तरो यमयति' (बृ० ३।७।४), 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' (बृ० ३।८।९) इत्येवंजातीयकं समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति। तस्मात्साध्यपक्षनिक्षिप्तत्वात्पयोम्बुवदित्यनुपन्यासः। चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः। वत्सचोषणेन च पयस आकृष्यमाणत्वात्। नचाम्बुनोऽप्यत्यन्तमनपेक्षा, निम्नभूम्याद्यपेक्षत्वात्स्यन्दनस्य। चेतनापेक्षत्वं तु सर्वत्रोपदर्शितम्। 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र० सू० २।१।२४) इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम्। शास्त्रदृष्ट्या तु पुनः सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम्। नतु तद्व्यतिरेकेण प्रधानस्य प्रवर्तकं निवर्तकं वा किंचिद्बाह्यमपेक्ष्यमवस्थितमस्ति। पुरुषस्तूदासीनो न प्रवर्तको न निवर्तक इत्यतोऽनपेक्षं प्रधानं, अनपेक्षत्वाच्च कदाचित्प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमत इत्येतदयुक्तम्। ईश्वरस्य तु सर्वज्ञत्वात्सर्वशक्तित्वान्महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते ॥ ४ ॥

---

१ साध्यवता पक्षेण तुल्यत्वात्। २ अनुपन्यासः न विचारभूमिः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

स्यादेतत् । यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं
क्षीराद्याकारेण परिणमत एवं प्रधानमपि महदाद्याकारेण
इति । कथं च निमित्तान्तरनिरपेक्षं तृणादीति गम्यते । निमि
पलम्भात् । यदि हि किंचिन्निमित्तमुपलभेमहि ततो यथा
तृणाद्युपादाय क्षीरं संपादयेमहि, नतु संपादयामहे । तस्मा
स्तृणादेः परिणामस्तथा प्रधानस्यापि स्यादिति । अत्रोच्यते
णादिवत्स्वाभाविकः प्रधानस्यापि परिणामो यदि तृणादेरपि
परिणामोऽभ्युपगम्येत । नत्वभ्युपगम्यते, निमित्तान्तरोपल
निमित्तान्तरोपलब्धिः, अन्यत्राभावात् । धेन्वैव ह्युपयुक्तं तृणं
भवति न [1]प्रहीणमनडुदाद्युपयुक्तं वा । यदि हि निर्निमित्तमेतत्
रीरसंबन्धादन्यत्रापि तृणादि क्षीरीभवेत् । नच यथाकामं मानु
संपादयितुमित्येतावता निर्निमित्तं भवति । भवति हि किंचित्
पसंपाद्यं किंचिद्दैवसंपाद्यम् । मनुष्या अपि शक्नुवन्त्येवोचि
तृणाद्युपादाय क्षीरं संपादयितुम् । प्रभूतं हि क्षीरं कामयमाना
घासं धेनुं चारयन्ति । ततश्च प्रभूतं क्षीरं लभन्ते । तस्मान्न
स्वाभाविकः प्रधानस्य परिणामः ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥

स्वाभाविकी प्रधानप्रवृत्तिर्न भवतीति स्थापितम् ।
भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्ति
च्छेम तथापि दोषोऽनुपज्येतैव । कुतः । [2]अर्थाभावात् । यदि ताव
प्रधानस्य प्रवृत्तिर्न किंचिदन्यदिहापेक्षत इत्युच्येत ततो यथैव
किंचिन्नापेक्षत एवं प्रयोजनमपि किंचिन्नापेक्षिष्यते इत्यतः प्र
स्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेत । स यदि ब्रू
केवलं नापेक्षते न प्रयोजनमपीति । तथापि प्रधानप्रवृत्तेः

---

१ प्रहीणं नष्टम् । २ अर्थाभावात् पुरुषार्थाभावप्रसङ्गात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विवेक्तव्यं भोगो वा स्यादपवर्गो वोभयं वेति । भोगश्चेत्कीदृशोऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत् । अनिर्मोक्षप्रसङ्गश्च । अपवर्गश्चेत्प्रागपि प्रवृत्तेरपवर्गस्य सिद्धत्वात्प्रवृत्तिरनर्थिका स्यात् । शब्दाद्यनुपलब्धिप्रसङ्गश्च । उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव । नचौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः । नहि प्रधानस्याचेतनस्यौत्सुक्यं संभवति । नच पुरुषस्य निर्मलस्य निष्कलस्यौत्सुक्यम् । दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाचेत्प्रवृत्तिस्तर्हि दृक्शक्त्यनुच्छेदवत्सर्गशक्त्यनुच्छेदात्संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव । तस्मात्प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम् ॥ ६ ॥

## पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥

स्यादेतत् । यथा कश्चित्पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिविहीनः पङ्गुरपरं पुरुषं प्रवृत्तिशक्तिसंपन्नं दृक्शक्तिविहीनमन्धमधिष्ठाय प्रवर्तयति । यथा वाऽयस्कान्तोऽश्मा स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति । एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम् । अत्रोच्यते—तथापि नैव दोषान्निर्मोक्षोऽस्ति । अभ्युपेतहानं तावद्दोष आपतति । प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात्, पुरुषस्य च प्रवर्तकत्वानभ्युपगमात् । कथं चोदासीनः पुरुषः प्रधानं प्रवर्तयेत् । पङ्गुरपि ह्यन्धं वागादिभिः पुरुषं प्रवर्तयति । नैवं पुरुषस्य कश्चिदपि प्रवर्तनव्यापारोऽस्ति, निष्क्रियत्वाच्च । नाप्ययस्कान्तवत्संनिधिमात्रेण प्रवर्तयेत् । संनिधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात् । अयस्कान्तस्य त्वनित्यसंनिधेरस्ति स्वव्यापारः संनिधिः, परिमार्जनाद्यपेक्षा चास्यास्तीत्यनुपन्यासः पुरुषाश्मवदिति । तथा प्रधानस्याचैतन्यात्पुरुषस्य चौदासीन्यात्तृतीयस्य च तयोः संबन्धयितुरभावात्संबन्धानुपपत्तिः । योग्यतानिमित्ते च संबन्धे योग्यतानुच्छेदादनिर्मोक्षप्रसङ्गः । पूर्ववच्चेहाप्यर्थाभावो विकल्पयितव्यः । परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यं मायाव्यपाश्रयं च प्रवर्तकत्वमित्यस्त्यतिशयः ॥ ७ ॥

---

१ सुखदुःखप्राप्तिपरिहाररूपातिशयशून्यस्य । २ मीयन्ते भुज्यन्ते इति मात्रा भोगाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

### अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते । यद्धि सत्त्वरजस्तमसां
न्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानं सा प्रधा
तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात्परस्परं
भावानुपपत्तेः । बाह्यस्य च कस्यचित्क्षोभयितुरभावाद्गुणवैषम्य
महदाद्युत्पादो न स्यात् ॥ ८ ॥

### अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

अथापि स्यादन्यथा वयमनुमिमीमहे यथा नायमनन्तरो दोषः
ज्येत । नह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते
णाभावात् । कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते । य
कार्योत्पाद उपपद्यते तथा तथैषां स्वभावोऽभ्युपगम्यते । चलं
मिति चास्त्यभ्युपगमः । तस्मात्साम्यावस्थायामपि वैषम्योप
एव गुणा अवतिष्ठन्त इति । एवमपि प्रधानस्य ज्ञशक्तिवियोगा
पपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव । ज्ञशक्तिमपि त
प्रतिवादित्वान्निवर्तेत । चेतनमेकमनेकप्रपञ्चस्य जगत उपा
ब्रह्मवादप्रसङ्गात् । वैषम्योपगमयोग्या अपि गुणाः साम्यावस्था
त्ताभावान्नैव वैषम्यं भजेरन् । भजमाना वा निमित्ताभावावि
दैव वैषम्यं भजेरन्निति प्रसज्यत एवायमनन्तरोऽपि दोषः ॥ ९

### विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः । क्वचित्सप्तेन्द्रिया
मन्ति, क्वचिदेकादश । तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति,
हंकारात् । तथा क्वचित्त्रीण्यन्तःकरणानि वर्णयन्ति क्वचिदेकमिति
एव तु श्रुत्येश्वरकारणवादिन्या विरोधस्तदनुवर्तिन्या च स्मृत्या ।
समञ्जसं सांख्यानां दर्शनमिति । अत्राह—नन्वौपनिषदानाम

---

१ त्वङ्मात्रमेव हि बुद्धीन्द्रियमनेकरूपादिग्रहणसमर्थमेकं, कर्मेन्द्रियाणि
च मन इति सप्तेन्द्रियाणि । २ ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च
३ बुद्धिरहंकारो मन इति त्रीणि । ४ एकमिति बुद्धिरेव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेव दर्शनं तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात् । एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छतामेकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतावित्यभ्युपगन्तव्यं स्यात् । यदि चैतौ तप्यतापकावेकस्यात्मनो विशेषौ स्यातां स ताभ्यां तप्यतापकाभ्यां न निर्मुच्येत इति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात् । नह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते । योऽपि जलतरङ्गवीचीफेनाद्युपन्यासः, तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः । प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके । तथाहि—अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते । यद्यर्थिनः स्वतोऽन्योऽर्थो न स्यात्, यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं स्यात्, यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं भवति । अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति । तथार्थस्याप्यर्थत्वं न स्यात् । यदि स्यात्स्वार्थत्वमेव स्यात् । नचैतदस्ति । संबन्धिशब्दौ ह्येतावर्थी चार्थश्चेति । द्वयोश्च संबन्धिनोः संबन्धः स्यान्नैकस्यैव तस्माद्भिन्नावेतावर्थार्थिनौ । तथानर्थानर्थिनावपि । अर्थिनोऽनुकूलोऽर्थः प्रतिकूलोऽनर्थस्ताभ्यामेकपर्यायेणोभाभ्यां संबध्यते । तत्रार्थस्याल्पीयस्त्वाद्भूयस्त्वाच्चानर्थस्योभावप्यर्थानर्थावनर्थ एवेति तापकः स उच्यते । तप्यस्तु पुरुषो य एकः पर्यायेणोभाभ्यां संबध्यत इति तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः । जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात्स्यादपि कदाचिन्मोक्षोपपत्तिरिति । अत्रोच्यते—न । एकत्वादेव तप्यतापकभावानुपपत्तेः । भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम् । नत्वेतदस्त्येकत्वादेव । नह्यग्निरेकः सन्स्वमात्मानं दहति प्रकाशयति वा सत्यप्यौष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च । किं कूटस्थे ब्रह्मण्येकस्मिंस्तप्यतापकभावः संभवेत् । क्व पुनरयं तप्यतापकभावः स्यादिति । उच्यते—किं न पश्यसि कर्मभूतो जीवद्देहस्तप्यस्तापकः सवितेति । ननु तप्तिर्नाम दुःखं सा चेतयितुर्नाचेतनस्य देहस्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यदि हि देहस्यैव तप्तिः स्यात्सा देहनाशे स्वयमेव नश्यतीति
साधनं नैषितव्यं स्यादिति । उच्यते—देहाभावेऽपि केवलस्य
तप्तिर्न दृष्टा । नच त्वयापि तप्तिर्नाम विक्रिया चेतयितुः केव
नापि देहचेतनयोः संहतत्वमशुद्ध्यादिदोषप्रसङ्गात् । नच तप्तौ
मभ्युपगच्छसि । कथं तवापि तप्यतापकभावः सत्त्वं तप्यं
इति चेत् । न । ताभ्यां चेतनस्य संहतत्वानुपपत्तेः । सत्त्वानुरोधि
ऽपि तप्यत इवेति चेत्, परमार्थतस्तर्हि नैव तप्यत इत्याप
प्रयोगात् । न चेत्तप्यते नेवशब्दो दोषाय । नहि डुण्डुभः स
तावता सविषो भवति । सर्पो वा डुण्डुभ इवेत्येतावता निर्विषो
अतश्चाविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिक इत्यभ्यु
मिति । नैवं सति ममापि किंचिद्दुष्यति । अथ पारमार्थिकमेव
तप्यत्वमभ्युपगच्छसि तवैव सुतरामनिर्मोक्षः प्रसज्येत, नि
गमाच्च तापकस्य । तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयो
त्तप्तेः संयोगनिमित्तादर्शननिवृत्तावात्यन्तिकः संयोगोपरमः,
न्तिको मोक्ष उपपन्न इति चेत् । न । अदर्शनस्य तमसो नित्य
मात् । गुणानां चोद्भवाभिभवयोरनियतत्वादनियतः संयोगनि
इति वियोगस्याप्यनियतत्वात्सांख्यस्यैवानिर्मोक्षोऽपरिहार्यः स्या
निषदस्य त्वात्मैकत्वाभ्युपगमादेकस्य च विषयविषयिभावानु
रभेदस्य च वाचारम्भणमात्रत्वश्रवणादनिर्मोक्षशङ्का स्वप्नेऽपि नो
व्यवहारे तु यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति
यितव्यः परिहर्तव्यो वा भवति ॥ १० ॥

## २ महद्दीर्घाधिकरणम् । सू० ११

प्रधानकारणवादो निराकृतः । परमाणुकारणवाद इदानीं नि
तत्रादौ तावद्योऽणुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्र
यते । तत्रायं वैशेषिकाणामभ्युपगमः—कारणद्रव्यसमवायि
कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते, शुक्लेभ्यस्तन्तु
पटस्य प्रसवदर्शनात्तद्विपर्ययादर्शनाच्च । तस्माच्चेतनस्य ब्रह्मणो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात् । तददर्शनात्तु न तनं ब्रह्म जगत्कारणं भवितुमर्हतीति । इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति—

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥

एषा तेषां प्रक्रिया—परमाणवः किल कंचित्कालमनारब्धकार्या यथागं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्च तिष्ठन्ति । ते च पश्चाददृष्टादिपुरःसराः संयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण कृत्स्नं कार्यजातमारभन्ते । कारणगुणाश्च कार्ये गुणान्तरम् । यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनपरानारभन्ते । परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते, द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात् । अणुत्वह्रस्वत्वे हि द्व्यणुकवर्तिनी परिमाणे वर्णयन्ति । यदापि द्वे[2] द्व्यणुके चतुरणुकमारभेते तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम् । अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते, चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात् । यदापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्यमारभते तदापि समानैषा योजना । तदेवं यथा परमाणोः परिमण्डलात्सतोऽणु ह्रस्वं च द्व्यणुकं जायते महद्दीर्घं च त्र्यणुकादि न परिमण्डलम्, यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घं त्र्यणुकं जायते नाणु नो ह्रस्वम्, एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे किं तव च्छिन्नम् । अथ मन्यसे विरोधिना परिमाणान्तरेणाक्रान्तं कार्यद्रव्यं द्व्यणुकादीत्यतो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनीत्यभ्युपगच्छामि, नतु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति, येन कारणगता चेतना कार्ये चेतनान्तरं नारभेत । नह्यचेतना नाम चेतनाविरोधी कश्चिद्गुणोऽस्ति, चेतनाप्रतिषेधमात्रात् । तस्मात्पारिमाण्डल्यादिवैषम्यात्प्राप्नोति चेतनाया आरम्भकत्व-

[1] परमाणुः परिमण्डलः तद्गतं परिमाणं पारिमाण्डल्यम् । [2] द्वे द्वे इति पठितव्यम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिति । मैवं मंस्थाः । यथा कारणे विद्यमानानामपि पारिमाण्ड
नारम्भकत्वमेवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात् । नच प
राक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणं, प्राक्प
रारम्भात्पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः । आरब्धमपि
प्राग्गुणारम्भात्क्षणमात्रमगुणं तिष्ठतीत्यभ्युपगमात् । नच प
रारम्भे व्यग्राणि पारिमाण्डल्यादीनीत्यतः स्वसमानजातीयं
न्तरं नारभन्ते परिमाणान्तरस्यान्यहेतुत्वाभ्युपगमात् । 'का
त्कारणमहत्त्वात्प्रचयविशेषाच्च महत्' (वै० सू० ७।१।९) 'तद्
(७।१।१०) 'एतेन दीर्घत्वह्रस्वत्वे व्याख्याते' (७।१।१७) इ
भुजानि सूत्राणि । नच संनिधानविशेषात्कुतश्चित्कारणबहुत्
भन्ते न पारिमाण्डल्यादीनीत्युच्येत, द्रव्यान्तरे गुणान्तरे
सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात् । तस्मा
पारिमाण्डल्यादीनामनारम्भकत्वं, तथा चेतनाया अपीति द्र
योगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात्समानजातीयो
चारः । द्रव्ये प्रकृते गुणोदाहरणमयुक्तमिति चेत् । न । दृ
क्षणारम्भमात्रस्य विवक्षितत्वात् । नच द्रव्यस्य द्रव्यमेवोदाह
वा गुण एवेति कश्चिन्नियमे हेतुरस्ति । सूत्रकारोऽपि भ
गुणमुदाजहार—'प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात्संयोगस्य प
विद्यते' (वै० सू० ४।२।२) इति । यथा प्रत्यक्षाप्रत्यक्षयोर्भू
समवयन्संयोगोऽप्रत्यक्ष एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु
रमप्रत्यक्षं स्यात् । प्रत्यक्षं हि शरीरम् । तस्मान्न पाञ्चभौ
एतदुक्तं भवति—गुणश्च संयोगो द्रव्यं शरीरम् । 'दृश्यते
सू० २।१।६ ) इति चात्रापि विलक्षणोत्पत्तिः प्रपञ्चिता ।
तेनैवैतद्गतम् । नेति ब्रूमः । तत्सांख्यं प्रत्युक्तम्, एतत्तु वै
नन्वतिदेशोऽपि समानन्यायतया कृतः । 'एतेन शिष्टापरिग्र
ख्याताः' (ब्र० सू० २।१।१२) इति । सत्यमेतत् । त
षिकप्रक्रियारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ३ परमाणुजगदकारणत्वाधिकरणम् । सू० १२–१७

### उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

इदानीं परमाणुकारणवादं निराकरोति । स च वाद इत्थं समुत्तिष्ठते—पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेव संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि । तत्सामान्येन यावत्किंचित्सावयवं तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते । स चायमवयवावयविविभागो यतो निवर्तते सोऽपकर्षपर्यन्तगतः परमाणुः । सर्वं चेदं जगद्गिरिसमुद्रादिकं सावयवं, सावयवत्वाच्चाद्यन्तवत् । न चाकारणेन कार्येण भवितव्यमित्यतः परमाणवो जगतः कारणमिति कणभुगभिप्रायः । तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते तेषां चापकर्षपर्यन्तगतत्वेन परतो विभागासंभवाद्विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति स प्रलयकालः । ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते । एवमग्निरेवमाप एवं पृथिवी एवमेव शरीरं सेन्द्रियमिति । एवं सर्वमिदं जगदणुभ्यः संभवति । अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्ति तन्तुपटन्यायेनेति काणादा मन्यन्ते । तत्रेदमभिधीयते—विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः, कर्मवतां तन्त्वादीनां संयोगदर्शनात् । कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम् । अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात् । अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा (अथा) यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत तस्यासंभवान्नैवाणुष्वाद्यं कर्म स्यात् । नहि तस्यामवस्थायामात्मगुणः प्रयत्नः संभवति शरीराभावात् । शरीरप्रतिष्ठे हि मनस्यात्मनः संयोगे सत्यात्मगुणः प्रयत्नो जायते । एतेनाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम् । सर्गोत्तरकालं हि तत्सर्वं नाद्यस्य

---

१ स्वानुगतैः स्वसंबद्धैः । संबन्धश्चाधार्याधारभूतः प्रलयहेतुः समुदायः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मणो निमित्तं संभवति । अथादृष्टमाद्यस्य कर्मणो निमि
तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा । उभयथापि
त्तमणुषु कर्मावकल्पेतादृष्टस्याचेतनत्वात् । नह्यचेतनं चेत
स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यप्रक्रियायामभिहितम् ।
नुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात् । आत्मसमवायि
माच्च नादृष्टमणुषु कर्मणो निमित्तं स्यादसंबन्धात् । अदृष्टवता
स्त्यणूनां संबन्ध इति चेत्, संबन्धसातत्यात्प्रवृत्तिसातत्यप्रसङ्गः
कान्तराभावात् । तदेवं नियतस्य कस्यचित्कर्मनिमित्तस्याभा
कर्म स्यात् । कर्माभावात्तन्निबन्धनः संयोगो न स्यात् । सं
तन्निबन्धनं द्व्यणुकादि कार्यजातं न स्यात् । संयोगश्चा
सर्वात्मना वा स्यादेकदेशेन वा । सर्वात्मना चेदुपचयानुप
त्वप्रसङ्गो दृष्टविपर्ययप्रसङ्गश्च । प्रदेशवतो द्रव्यस्य प्रदेशवता
रेण संयोगस्य दृष्टत्वात् । एकदेशेन चेत्सावयवत्वप्रसङ्गः
कल्पिताः प्रदेशाः स्युरिति चेत्, कल्पितानामवस्तुत्वादवस्त्
इति वस्तुनः कार्यस्यासमवायिकारणं न स्यात् । असति चा
रणे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत । यथाचादिसर्गे निमित्ता
गोत्पत्त्यर्थं कर्म नाणूनां संभवत्येवं महाप्रलयेऽपि विभागोत्
नैवाणूनां संभवेत् । नहि तत्रापि किंचिन्नियतं तन्निमित्तं
अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलयप्रसिद्ध्यर्थमित्यतो नि
स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म । अतश्च
भागाभावात्तदायत्तयोः सर्गप्रलययोरभावः प्रसज्येत । तस्मा
परमाणुकारणवादः ॥ १२ ॥

**समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥**

समवायाभ्युपगमाच्च तदभाव इति प्रकृतेनाणुवादनिराक
ध्यते । द्वाभ्यां चाणुभ्यां द्व्यणुकमुत्पद्यमानमत्यन्तभिन्नमणुभ्या
वैतीत्यभ्युपगम्यते भवता । नचैवमभ्युपगच्छता शक्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGango

समर्थयितुम् । कुतः । साम्यादनवस्थितेः । यथैव ह्यणुभ्यामत्यन्तभिन्नं सद्व्यणुकं समवायलक्षणेन संबन्धेन ताभ्यां संबध्यत एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन्समवायलक्षणेनान्येनैव संबन्धेन समवायिभिः संबध्येतात्यन्तभेदसाम्यात् । ततश्च तस्य तस्यान्योन्यः संबन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत । नन्विह प्रत्ययग्राह्यः समवायो नित्यसंबद्ध एव समवायिभिर्गृह्यते नासंबद्धः संबन्धान्तरापेक्षो वा । ततश्च न तस्यान्यः संबन्धः कल्पयितव्यो येनानवस्था प्रसज्येतेति । नेत्युच्यते । संयोगोऽप्येवं सति संयोगिभिर्नित्यसंबद्ध एवेति समवायवन्नान्यं संबन्धमपेक्षेत । अथार्थान्तरत्वात्संयोगः संबन्धान्तरमपेक्षेत, समवायोऽपि ह्यर्थान्तरत्वात्संबन्धान्तरमपेक्षेत । नच गुणत्वात्संयोगः संबन्धान्तरमपेक्षते न समवायोऽगुणत्वादिति युज्येत वक्तुम् । अपेक्षाकारणस्य तुल्यत्वात् । गुणपरिभाषायाश्चातन्त्रत्वात् । तस्मादर्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था । प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १३ ॥

## नित्यमेव च भावात् ॥ १४ ॥

अपिचाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वानुभयस्वभावा वाऽभ्युपगम्यन्ते गत्यन्तराभावात् । चतुर्धापि नोपपद्यते । प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात्प्रलयाभावप्रसङ्गः । निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात्सर्गाभावप्रसङ्गः । उभयस्वभावत्वं च विरोधादसमञ्जसम् । अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यप्रवृत्तिप्रसङ्गात् । अतन्त्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसङ्गात् । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥

सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः परो विभागो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न संभवति ते चतुर्विधा रूपादिमन्तः परमाणवश्चतुर्विधस्य विशेष
भूतभौतिकस्यारम्भका नित्याश्चेति यद्वैशेषिका अभ्युपगच्छन्ति
मभ्युपगमो निरालम्बन एव। यतो रूपादिमत्त्वात्परमाणूनामणुत्वनित्यत्वाद
विपर्ययः प्रसज्येत । परमकारणापेक्षया स्थूलत्वमनित्यत्वं च
तद्विपरीतमापद्येतेत्यर्थः । कुतः । एवं लोके दृष्टत्वात् । यद्धि
दिमद्वस्तु तत्स्वकारणापेक्षया स्थूलमनित्यं च दृष्टम् । तद्यथा
पेक्ष्य स्थूलोऽनित्यश्च भवति तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च
तथाचामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते, तस्मात्तेऽपि
न्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति । यच्च नित्यत्वे
क्तम्—'सदकारणवन्नित्यम्' (वै० सू० ४।१।१) इति । तद
णुषु न संभवति । उक्तेन प्रकारेणाणूनामपि कारणवत्त्वोपपत्ते
नित्यत्वे द्वितीयं कारणमुक्तम्—'अनित्यमिति च विशेषतः प्रति
(वै० ४।१।४।) इति । तदपि नावश्यं परमाणूनां नित्यत्वं
असति हि यस्मिन्कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः सं
पद्यते । न पुनः परमाणुनित्यत्वमेवापेक्ष्यते । तच्चास्त्येव नित्यं
रणं ब्रह्म । नच शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसि
प्रमाणान्तरसिद्धयोः शब्दार्थयोर्व्यवहारावतारात् । यदपि नि
कारणमुक्तम्—'अविद्या च' (वै० ४।१।५) इति, तद्यद्येवं
सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेणाग्रहणमविद्येति
णुकनित्यताऽप्यापद्येत । अथाद्रव्यत्वे सतीति विशेष्येत तथा
त्वमेव नित्यतानिमित्तमापद्येत । तस्य च प्रागेवोक्तत्वात्
इति पुनरुक्तं स्यात् । अथापि कारणविभागात्कारणविनाशा
तृतीयस्य विनाशहेतोरसंभवोऽविद्या सा परमाणूनां नित्यत्वं
व्याख्यायेत । नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां वि
नियमोऽस्ति । संयोगसचिवे ह्यनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्या
पगम्यमान एतदेवं स्यात् । यदा त्वपास्तविशेषं सामान्या

१ सत्त्वं भावत्वं प्रागभावनिरासार्थम् । २ एवं सति परमाणूनां कार

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषवदवस्थान्तरमापद्यमानमारम्भकमभ्युपगम्यते तदा घृतकाठिन्यविलयनवन्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते । तस्माद्रूपादिमत्त्वात्स्यादभिप्रेतविपर्ययः परमाणूनाम् । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १५ ॥

## उभयथा च दोषात् ॥ १६ ॥

गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी, रूपरसस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः, स्पर्शगुणः सूक्ष्मतमो वायुरित्येवमेतानि चत्वारि भूतान्युपचितापचितगुणानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानि च लोके लक्ष्यन्ते, तद्वत्परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन्न वा । उभयथापि च दोषानुषङ्गोऽपरिहार्य एव स्यात् । कल्प्यमाने तावदुपचितापचितगुणत्व उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः । नचान्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्यते, कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात् । अकल्प्यमाने तूपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत्सर्वे एकैकगुणा एव कल्प्येरंस्ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात्, अप्सु रूपस्पर्शयोः, पृथिव्यां च रसरूपस्पर्शानां, कारणगुणपूर्वकत्वात्कार्यगुणानाम् । अथ सर्वे चतुर्गुणा एव कल्प्येरन्, ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात्, तेजसि गन्धरसयोः, वायौ गन्धरूपरसानाम् । नचैवं दृश्यते । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनिबद्धः । अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः । अपिच वैशेषिकास्तन्त्रार्थभूतान्षट्पदार्थान्द्रव्यगुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान्भिन्नलक्षणानभ्युपगच्छन्ति । यथा मनुष्योऽश्वः शश इति । तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्यु-

१ मूर्त्युपचयात् स्थौल्यादित्यर्थः । २ तथात्वमत्यन्तभिन्नत्वम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परागच्छन्ति। तन्नोपपद्यते। कथम्। यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामप्यत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ भवति द्रव्याधीनत्वं गुणादीनां ततो द्रव्यभावे भावाद्द्रव्याभावेऽभावाद्द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति। यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग्भवति तद्वत्। तथा सति सांख्यसिद्धान्तप्रसङ्गः[१] स्वसिद्धान्तविरोधश्चापद्येयाताम्। नन्वग्नेरन्यस्यापि सतो धूमस्याग्न्यधीनत्वं दृश्यते। सत्यं दृश्यते। भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते। इह तु शुक्लः कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन तेन विशेषणेन प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति। तस्माद्द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्मकता व्याख्याता। गुणादीनां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यदुच्येत, तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यादपृथक्कालत्वं वाऽपृथक्स्वभावत्वं वा। सर्वथापि नोपपद्यते। अपृथग्देशत्वे तावत्स्वाभ्युपगमो विरुध्येत। कथम्। तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते न पटदेशः। पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते न तन्तुदेशाः। तथाचाहुः—'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' (वै० १।१।१०) इति। तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटमारभन्ते। तन्तुगताश्च गुणाः शुक्लादयः कार्यद्रव्ये पटे शुक्लादिगुणान्तरमारभन्त इति हि तेऽभ्युपगच्छन्ति। सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत। अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत। तथाऽपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः संभवति, तस्य तादात्म्येनैव प्रतीयमानत्वात्। युतसिद्धयोः संबन्धः संयोगोऽयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव तेषाम्, प्राक्सिद्धस्य कार्यात्कारणस्यायुतसिद्धत्वानुपपत्तेः। अथान्यतर

१ सांख्योऽत्र वेदान्ती ग्राह्यः। यद्वा कापिलस्यापि तादात्म्यसिद्धान्त ग्रहणम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यमभ्युपगमः स्यादयुतसिद्धस्य कार्यस्य कारणेन संबन्धः समवाय इति, एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन संबन्धो नोपपद्यते द्वयायत्तत्वात्संबन्धस्य। सिद्धं भूत्वा संबध्यत इति चेत्, प्राक्कारणसंबन्धात्कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्ध्यभावात्कार्यकारणयोः संयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्। यथा चोत्पन्नमात्रस्याक्रियस्य कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैः संबन्धः संयोग एवाभ्युपगम्यते न समवायः, एवं कारणद्रव्येणापि संबन्धः संयोग एव स्यान्न समवायः। नापि संयोगस्य समवायस्य वा संबन्धस्य संबन्धिव्यतिरेकेणास्तित्वे किंचित्प्रमाणमस्ति। संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात्तयोरस्तित्वमिति चेत्। न। एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयानेकशब्दप्रत्ययदर्शनात्। यथैकोऽपि सन् देवदत्तो लोके स्वरूपं संबन्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति, मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति, यथा चैकापि सती रेखा स्थानान्यत्वेन निविशमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति, तथासंबन्धिनोरेव संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वं न व्यतिरिक्तवस्त्वस्तित्वेन, इत्युपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य। नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्यययोः संततभावप्रसङ्गः। स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात्। तथाऽण्वात्ममनसामप्रदेशत्वान्न संयोगः संभवति, प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात्। कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीतिचेत्। न। अविद्यमानार्थकल्पनायां सर्वार्थसिद्धिप्रसङ्गात्। इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमहेत्वभावात्। कल्पनायाश्च स्वायत्तत्वात्प्रभूतत्वसंभवाच्च। नच वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्योऽन्येऽधिकाः शतं सहस्रं वार्था न कल्पयितव्या इति निवारको हेतुरस्ति। तस्माद्यस्मै

१ प्रभूतत्वसंभवान्निरवधित्वसंभवात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यस्मै यद्यद्रोचते तत्तत्सिद्ध्येत्। कश्चित्कृपालुः प्राणिनां दुःखबहु
एव माभूदिति कल्पयेत्। अन्यो वा व्यसनी मुक्तानामपि पु
कल्पयेत्। कस्तयोर्निवारकः स्यात्। किंचान्यत्। द्वाभ्यां प
निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः।
काशस्य पृथिव्यादीनां च जतुकाष्ठवत्संश्लेषोऽस्ति। कार्यकारण
श्रिताश्रयभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यः समवाय इति
न। इतरेतराश्रयत्वात्। कार्यकारणयोर्हि भेदसिद्धावाश्रिताश्र
द्धिराश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः कुण्डबदरवदितीत
यता स्यात्। नहि कार्यकारणयोर्भेद आश्रिताश्रयभावो वा वेदा
भिरभ्युपगम्यते, कारणस्यैव संस्थानमात्रं कार्यमित्यभ्युपगमात्।
न्यत्। परमाणूनां परिच्छिन्नत्वाद्यावत्यो दिशः षडष्टौ दश वा
रवयवैः सावयवास्ते स्युः सावयवत्वादनित्याश्चेति नित्यत्वनिर
भ्युपगमो बाध्येत। यांस्त्वं दिग्भेदभेदिनोऽवयवान्कल्पयसि त
माणव इति चेत्। न। स्थूलसूक्ष्मतारतम्यक्रमेणा परमकारण
पपत्तेः। यथा पृथिवी द्व्यणुकाद्यपेक्षया स्थूलतमा वस्तुभूतापि
ततः सूक्ष्मं सूक्ष्मतरं च पृथिव्येकजातीयकं विनश्यति, ततो
तथा परमाणवोऽपि पृथिव्येकजातीयकत्वाद्विनश्येयुः। विनश्य
वयवविभागेनैव विनश्यन्तीति चेत्। नायं दोषः। यतो घृतका
लयनवदपि विनाशोपपत्तिमवोचाम। यथा हि घृतसुवर्णादी
ज्यमानावयवानामप्यग्निसंयोगाद्द्रवभावापत्त्या काठिन्यविनाशो
एवं परमाणूनामपि परमकारणभावापत्त्या मूर्त्यादिविनाशो
तथा कार्यारम्भोऽपि नावयवसंयोगेनैव केवलेन भवति, क्षी
नामन्तरेणाप्यवयवसंयोगान्तरं दधिहिमादिकार्यारम्भदर्शनात्।
सारतरतर्कसंदृब्धत्वादीश्वरकारणश्रुतिविरुद्धत्वाच्छ्रुतिप्रवणैश्च
दिभिरपरिगृहीतत्वादत्यन्तमेवानपेक्षास्मिन्परमाणुकारणवादे
र्थिभिरिति वाक्यशेषः॥ १७॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ४ समुदायाधिकरणम् । सू० १८–२७

### समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥

वैशेषिकराद्धान्तो दुर्युक्तियोगाद्वेदविरोधाच्छिष्टापरिग्रहाच्च नापेक्षितव्य इत्युक्तम् । सोऽर्धवैनाशिक इति वैनाशिकत्वसाम्यात्सर्ववैनाशिकराद्धान्तो नतरामपेक्षितव्य इतीदमिदानीमुपपादयामः । स च बहुप्रकारः प्रतिपत्तिभेदाद्विनेयभेदाद्वा । तत्रैते त्रयो वादिनो भवन्ति—केचित्सर्वास्तित्ववादिनः, केचिद्विज्ञानास्तित्वमात्रवादिनः, अन्ये पुनः सर्वशून्यत्ववादिन इति । तत्र ते सर्वास्तित्ववादिनो बाह्यमान्तरं च वस्त्वभ्युपगच्छन्ति भूतं भौतिकं च चित्तं चैत्तं च, तांस्तावत्प्रतिब्रूमः । तत्र भूतं पृथिवीधात्वादयः । भौतिकं रूपादयश्चक्षुरादयश्च । चतुष्टये च पृथिव्यादिपरमाणवः खरस्नेहोष्णेरणस्वभावास्ते पृथिव्यादिभावेन संहन्यन्त इति मन्यन्ते । तथा रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्चस्कन्धाः । तेऽप्याध्यात्मं सर्वव्यवहारास्पदभावेन संहन्यन्त इति मन्यन्ते । तत्रेदमभिधीयते—योऽयमुभयहेतुक उभयप्रकारः समुदायः परेषामभिप्रेतोऽणुहेतुकश्च भूतभौतिकसंहतिरूपः स्कन्धहेतुकश्च पञ्चस्कन्धीरूपः तस्मिन्नुभयहेतुकेऽपि समुदायेऽभिप्रेयमाणे तदप्राप्तिः स्यात्समुदायाप्राप्तिः । समुदायभावानुपपत्तिरित्यर्थः । कुतः । समुदायिनामचेतनत्वात् । चित्ताभिज्वलनस्य च समुदायसिद्ध्यधीनत्वात् । अन्यस्य च कस्यचिच्चेतनस्य भोक्तुः प्रशासितुर्वा स्थिरस्य संहन्तुरनभ्युपगमात् निरपेक्षप्रवृत्त्यभ्युपगमे च प्रवृत्त्यनुपरमप्रसङ्गात् । आशयस्याप्यन्यत्वानन्यत्वाभ्यामनिरूप्यत्वात् । क्षणिकत्वाभ्युपगमाच्च निर्व्यापार-

---

१ भूतं भौतिकं बाह्यम्, चित्तं चैत्तं च कामाद्यान्तरमिति विभागः । २ चतुष्टये चतुर्विधाः । खराः कठिनाः, पार्थिवाः परमाणवः, स्निग्धा आप्याः, उष्णास्तैजसाः, ईरणं चलनं स्वभावो वायव्यानामिति । ३ सविषयेन्द्रियाणि रूपस्कन्धः, अहमहमित्यालयविज्ञानप्रवाहो विज्ञानस्कन्धः, सुखाद्यनुभवो वेदान्तस्कन्धः, गौरश्व इत्येवंनामविशिष्टसविकल्पकप्रत्ययः संज्ञास्कन्धः, रागद्वेषमोहधर्माधर्माः संस्कारस्कन्धः । ४ आद्येरतेऽस्मिन् रागादय इत्याशयः संतानः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वात्प्रवृत्त्यनुपपत्तेः । तस्मात्समुदायानुपपत्तिः । समुदायानु
तदाश्रया लोकयात्रा लुप्येत ॥ १८ ॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात्

यद्यपि भोक्ता प्रशासिता वा कश्चिच्चेतनः संहन्ता स्थिरो
म्यते तथाप्यविद्यादीनामितरेतरकारणत्वादुपपद्यते लोकयात्रा ।
चोपपद्यमानायां न किंचिदपरमपेक्षितव्यमस्ति । ते चाविद्या
संस्कारो विज्ञानं नाम रूपं षडायतनं स्पर्शो वेदना तृष्णा
भवो जातिर्जरा मरणं शोकः परिदेवना दुःखं दुर्मनस्तेत्येवं
इतरेतरहेतुकाः सौगते समये क्वचित्संक्षिप्ता निर्दिष्टाः क्वचित्
सर्वेषामप्ययमविद्यादिकलापोऽप्रत्याख्येयः । तदेवमविद्यादिक
परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमानेऽर्थाक्षिप्त
संघात इति चेत् । तन्न । कस्मात् । उत्पत्तिमात्रनिमित्तत्वात् ।
पन्नः संघातो यदि संघातस्य किंचिन्निमित्तमवगम्येत । न त
यत इतरेतरप्रत्ययत्वेऽप्यविद्यादीनां पूर्वपूर्वमुत्तरोत्तरस्योत्
मित्तं भवद्भवेन्न तु संघातोत्पत्तेः किंचिन्निमित्तं संभवति । नन्व
मिरर्थादाक्षिप्यते संघात इत्युक्तम् । अत्रोच्यते—यदि ताव
योऽविद्यादयः संघातमन्तरेणात्मानमलभमाना अपेक्षन्ते
ततस्तस्य संघातस्य निमित्तं वक्तव्यम् । तच्च नित्येष्वप्यणुषु
मानेष्वाश्रयाश्रयिभूतेषु च भोक्तृषु सत्सु न संभवतीत्युक्तं
क्षायाम् । किमङ्ग पुनः क्षणिकेष्वप्यणुषु भोक्तृरहितेष्वाश्रया
वाभ्युपगम्यमानेषु संभवेत् । अथायमभिप्रायोऽविद्यादय एव
निमित्तमिति, कथं तमेवाश्रित्यात्मानं लभमानास्तस्यैव नि
अथ मन्यसे संघाता एवानादौ संसारे संतत्यानुवर्तन्ते
विद्यादय इति, तदपि संघातात्संघातान्तरमुत्पद्यमानं, नियमेन

---

१ कार्यं प्रति अयते गच्छतीति प्रत्ययः कारणम् । २ विज्ञानं पृथिव्यादि
चेति षडायतनानि यस्येन्द्रियजातस्य तत्षडायतनम् । ३ तृष्णया वाचा
४ हा पुत्र, धावेत्यादिप्रलापः परिदेवना । ५ आश्रयेत्यादि भोक्तृविशे
षित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मेवोत्पद्येत, अनियमेन वा सदृशं विसदृशं वोत्पद्येत । नियमाभ्युपगमे मनुष्यपुद्गलस्य देवतिर्यग्योनिनारकप्राप्त्यभावः प्राप्नुयात् । अनियमाभ्यु-पगमेऽपि मनुष्यपुद्गलः कदाचित्क्षणेन हस्ती भूत्वा देवो वा पुनर्मनुष्यो वा भवेदिति प्राप्नुयात् । उभयमप्यभ्युपगमविरुद्धम् । अपिच यद्भोगार्थः संघातः स्यात्स नास्ति स्थिरो भोक्तेति तवाभ्युपगमः । ततश्च भोगो भोगार्थ एव स नान्येन प्रार्थनीयः । तथा मोक्षो मोक्षार्थ एवेति मुमु-क्षुणा नान्येन भवितव्यम् । अन्येन चेत्प्रार्थ्येतोभयं भोगमोक्षकालाव-स्थायिना तेन भवितव्यम् । अवस्थायित्वे क्षणिकत्वाभ्युपगमविरोधः । तस्मादितरेतरोत्पत्तिमात्रनिमित्तत्वमविद्यादीनां यदि भवेद्भवतु नाम नतु संघातः सिध्येत् । भोक्त्रभावादित्यभिप्रायः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

उक्तमेतदविद्यादीनामुत्पत्तिमात्रनिमित्तत्वान्न संघातसिद्धिरस्तीति । तदपि तूत्पत्तिमात्रनिमित्तत्वं न संभवतीतीदमिदानीमुपपाद्यते । क्षण-भङ्गवादिनोऽयमभ्युपगम उत्तरस्मिन्क्षण उत्पद्यमाने पूर्वः क्षणो निरु-ध्यत इति । नचैवमभ्युपगच्छता पूर्वोत्तरयोः क्षणयोर्हेतुफलभावः शक्यते संपादयितुम् । निरुध्यमानस्य[1] निरुद्धस्य वा पूर्वक्षणस्याभावग्र-स्तत्वादुत्तरक्षणहेतुत्वानुपपत्तेः । अथ भावभूतः परिनिष्पन्नावस्थः पूर्व-क्षण उत्तरक्षणस्य हेतुरित्यभिप्रायस्तथापि नोपपद्यते । भावभूतस्य पुन-र्व्यापारकल्पनायां क्षणान्तरसंबन्धप्रसङ्गात् । अथ भाव एवास्य व्यापार इत्यभिप्रायस्तथापि नैवोपपद्यते । हेतुस्वभावानुपरक्तस्य फलस्योत्पत्त्यसं-भवात् । स्वभावोपरागाभ्युपगमे च हेतुस्वभावस्य फलकालावस्थायित्वे सति क्षणभङ्गाभ्युपगमत्यागप्रसङ्गः । विनैव वा स्वभावोपरागेण हेतु-फलभावमभ्युपगच्छतः सर्वत्र तत्प्राप्तेरतिप्रसङ्गः । अपिचोत्पादनिरोधौ नाम वस्तुनः स्वरूपमेव वा स्यातामवस्थान्तरं वा वस्त्वन्तरमेव वा । सर्वथापि नोपपद्यते । यदि तावद्वस्तुनः स्वरूपमेवोत्पादनिरोधौ स्यातां ततो वस्तुशब्द उत्पादनिरोधशब्दौ च पर्यायाः प्राप्नुयुः । अथास्ति कश्चिद्विशेष इति मन्येतोत्पादनिरोधशब्दाभ्यां मध्यवर्तिनो वस्तुन आद्यन्ताख्ये अवस्थे

---

[1] निरुध्यमानत्वं विनाशकसांनिध्यम् । निरुद्धत्वमतीतत्वम् ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिलप्येते इति । एवमप्याद्यन्तमध्यक्षणत्रयसंबन्धित्वाद्वस्तु नहि भ
त्वाभ्युपगमहानिः अथात्यन्तव्यतिरिक्तावेवोत्पादनिरोधौ वस्तु प्रत्यभि
मश्वमहिषवत्, ततो वस्तु उत्पादनिरोधाभ्यामसंसृष्टमिति वस्तु
तत्वप्रसङ्गः । यदि च दर्शनादर्शने वस्तुन उत्पादनिरोधौ स्य नि
एवमपि द्रष्टृधर्मौ तौ न वस्तुधर्माविति वस्तुनः शाश्वतत्वप्रस
तस्मादप्यसंगतं सौगतं मतम् ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

क्षणभङ्गवादे पूर्वक्षणो निरोधग्रस्तत्वान्नोत्तरस्य क्षणस्य
त्युक्तम् । अथासत्येव हेतौ फलोत्पत्तिं ब्रूयात्, ततः प्रतिज्ञोपरो
चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्त इतीयं प्रतिज्ञा
निर्हेतुकायां चोत्पत्तावप्रतिबन्धात्सर्वं सर्वत्रोत्पद्येत । अथो
त्तिर्यावत्तावदवतिष्ठते पूर्वक्षण इति ब्रूयात्ततो यौगपद्यं हेतुफ
तथापि प्रतिज्ञोपरोध एव स्यात् । क्षणिकाः सर्वे संस्कारा इ
ज्ञोपरुध्येत ॥ २१ ॥

## प्रतिसंख्याऽप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥

अपिच वैनाशिकाः कल्पयन्ति बुद्धिबोध्यं त्रयादन्यत्संस्
चेति । तदपि च त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावाकाशं
क्षते । त्रयमपि चैतदवस्त्वभावमात्रं निरुपाख्यमिति मन्यन्ते
र्वकः किल विनाशो भावानां प्रतिसंख्यानिरोधो नाम भाष्यते,
ऽप्रतिसंख्यानिरोधः, आवरणाभावमात्रमाकाशमिति । तेषामा
स्प्रत्याख्यास्यति । निरोधद्वयमिदानीं प्रत्याचष्टे । प्रतिसंख्याऽप्र
रोधयोरप्राप्तिः । असंभव इत्यर्थः । कस्मात् । अविच्छेदात् ।
प्रतिसंख्याऽप्रतिसंख्यानिरोधौ संतानगोचरौ वा स्यातां भाव
न तावत्संतानगोचरौ संभवतः । सर्वेष्वपि संतानेषु संतानि
हेतुफलभावेन संतानविच्छेदस्यासंभवात् । नापि भावगोचरौ

१ निरुपाख्यं निःस्वरूपम् । २ प्रतीपा प्रतिकूला संख्या सन्तं
त्येवंख्या बुद्धिः प्रतिसंख्या तया निरोधः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नहि भावानां निरन्वयो निरुपाख्यो विनाशः संभवति, सर्वास्वप्यवस्थासु प्रत्यभिज्ञानबलेनान्वय्यविच्छेददर्शनात् । अस्पष्टप्रत्यभिज्ञानास्वप्यवस्थासु क्वचिद्दृष्टेनान्वय्यविच्छेदेनान्यत्रापि तदनुमानात् । तस्मात्परपरिकल्पितस्य निरोधद्वयस्यानुपपत्तिः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

योऽयमविद्यादिनिरोधः प्रतिसंख्यानिरोधान्तःपाती परपरिकल्पितः, स सम्यग्ज्ञानाद्वा सपरिकरात्स्यात्स्वयमेव वा । पूर्वस्मिन्विकल्पे निर्हेतुकविनाशाभ्युपगमहानिप्रसङ्गः । उत्तरस्मिंस्तु मार्गोपदेशानर्थक्यप्रसङ्गः । एवमुभयथापि दोषप्रसङ्गादसमञ्जसमिदं दर्शनम् ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

यच्च तेषामेवाभिप्रेतं निरोधद्वयमाकाशं च निरुपाख्यमिति, तत्र निरोधद्वयस्य निरुपाख्यत्वं पुरस्तान्निराकृतम् । आकाशस्येदानीं निराक्रियते । आकाशे चायुक्तो निरुपाख्यत्वाभ्युपगमः । प्रतिसंख्याऽप्रतिसंख्यानिरोधयोरिव वस्तुत्वप्रतिपत्तेरविशेषात् । आगमप्रामाण्यात्तावत् 'आत्मन आकाशः संभूतः' (तै० २।१) इत्यादिश्रुतिभ्य आकाशस्य वस्तुत्वप्रसिद्धिः । विप्रतिपन्नान्प्रति तु शब्दगुणानुमेयत्वं वक्तव्यं, गन्धादीनां गुणानां पृथिव्यादिवस्त्वाश्रयत्वदर्शनात् । अपि चावरणाभावमात्रमाकाशमिच्छतामेकस्मिन्सुपर्णे पतत्यावरणस्य विद्यमानत्वात्सुपर्णान्तरस्योत्पित्सतोऽनवकाशत्वप्रसङ्गः । यत्रावरणाभावस्तत्र पतिष्यतीति चेत् । येनावरणाभावो विशेष्यते तत्तर्हि वस्तुभूतमेवाकाशं स्यात्, नावरणाभावमात्रम् । अपिचावरणाभावमात्रमाकाशं मन्यमानस्य सौगतस्य स्वाभ्युपगमविरोधः प्रसज्येत । सौगते हि समये 'पृथिवी भगवः किंसंनिश्रया' इत्यस्मिन्प्रतिवचनप्रवाहे पृथिव्यादीनामन्ते 'वायुः किंसंनिश्रयः' इत्यस्य प्रश्नस्य प्रतिवचनं भवति 'वायुराकाशसंनिश्रयः'

१ परिकरा यमनियमादयस्तत्सहितात् । २ सर्वं दुःखं क्षणिकमिति भावनोपदेशो मार्गोपदेशः । ३ पतिष्यति संचरिष्यतीत्यर्थः । ४ किं सम्यक् निश्रय आश्रयोऽस्या इति किंसंनिश्रया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति । तदाकाशस्यावस्तुत्वे न समञ्जसं स्यात् । तस्मादप्ययुक्त
वस्तुत्वम् । अपिच निरोधद्वयमाकाशं च त्रयमप्येतदवि
नित्यं चेति विप्रतिपिद्धम् । नह्यवस्तुनो नित्यत्वमनित्यत्वं वा
वस्त्वाश्रयत्वाद्धर्मधर्मिव्यवहारस्य । धर्मधर्मिभावे हि घटादि
स्यान्न निरुपाख्यत्वम् ॥ २४ ॥

अनुस्मृतेश्च ॥ २५ ॥

अपिच वैनाशिकः सर्वस्य वस्तुनः क्षणिकतामभ्युपय
क्षणिकतामभ्युपेयात् । नच सा संभवति । अनुस्मृतेः अनुभव
मनूत्पद्यमानं स्मरणमेवानुस्मृतिः । सा चोपलब्ध्येककर्तृका सती
पुरुषान्तरोपलब्धिविषये पुरुषान्तरस्य स्मृत्यदर्शनात् । कथं
ऽद्राक्षमिदं पश्यामीति च पूर्वोत्तरदर्शिन्येकस्मिन्नसति प्रत्य
अपिच दर्शनस्मरणयोः कर्तर्येकस्मिन्प्रत्यक्षः प्रत्यभिज्ञाप्रत्य
लोकस्य प्रसिद्धोऽहमदोऽद्राक्षमिदं पश्यामीति । यदि हि तयोः
स्यात्ततोऽहं स्मराम्यद्राक्षीदन्य इति प्रतीयात् । नत्वेवं प्रत्येति
यत्रैवं प्रत्ययस्तत्र दर्शनस्मरणयोर्भिन्नमेव कर्तारं सर्वलोकोऽव
स्मराम्यहमसावदोऽद्राक्षीदिति । इह त्वहमदोऽद्राक्षमिति द्रष्टृस्म
वैनाशिकोऽप्यात्मानमेवैकं कर्तारमवगच्छति । न नाहमित्यात्मनो
निर्वृत्तं निह्नुते यथाग्निरनुष्णोऽप्रकाश इति वा । तत्रैवं सत्येक
स्मरणलक्षणक्षणद्वयसंबन्धे क्षणिकत्वाभ्युपगमहानिरपरिहार्या
स्यात् । तथाऽनन्तरामनन्तरामात्मन एव प्रतिपत्तिं प्रत्यभिज्ञा
कामोत्तमादुच्छ्वासादतीताश्च प्रतिपत्तीरा जन्मन आत्मैककर्तृका
दधानः कथं क्षणभङ्गवादी वैनाशिको नापत्रपेत । स यदि ब्रू
श्यादेतत्संपत्स्यत इति । तं प्रतिब्रूयात् । तेनेदं सदृशमिति
त्सादृश्यस्य, क्षणभङ्गवादिनः सदृशयोर्द्वयोर्वस्तुनोर्ग्रहीतुरेकस्य
सादृश्यनिमित्तं प्रतिसंधानमिति मिथ्याप्रलाप एव स्यात् ।
रयोः क्षणयोः सादृश्यस्य ग्रहीतैकः, तथासत्येकस्य क्षणद्वया
णिकत्वप्रतिज्ञा पीड्येत । तेनेदं सदृशमिति प्रत्ययान्तरमेवेदं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षणद्वयग्रहणनिमित्तमितिचेत् । न । तेनेदमिति भिन्नपदार्थोपादानात् । प्रत्ययान्तरमेव चेत्सादृश्यविषयं स्यात्तेनेदं सदृशमिति वाक्यप्रयोगोऽनर्थकः स्यात् । सादृश्यमित्येव प्रयोगः प्राप्नुयात् । यदा हि लोकप्रसिद्धः पदार्थः परीक्षकैर्न परिगृह्यते तदा स्वपक्षसिद्धिः परपक्षदोषो वोभयमप्युच्यमानं परीक्षकाणामात्मनश्च यथार्थत्वेन न बुद्धिसंतानमारोहति । एवमेवैषोऽर्थ इति निश्चितं यत्तदेव वक्तव्यम् । ततोऽन्यदुच्यमानं बहुप्रलापित्वमात्मनः केवलं प्रख्यापयेत् । नचायं सादृश्यात्संव्यवहारो युक्तः । तद्भावावगमात्तत्सदृशभावानवगमाच्च । भवेदपि कदाचिद्बाह्यवस्तुनि विप्रलम्भसंभवात्तदेवेदं स्यात्तत्सदृशं वेति संदेहः । उपलब्धरि तु संदेहोऽपि न कदाचिद्भवति स एवाहं स्यां तत्सदृशो वेति । य एवाहं पूर्वेद्युरद्राक्षं स एवाहमद्य स्मरामीति निश्चिततद्भावोपलम्भात् । तस्मादप्यनुपपन्नो वैनाशिकसमयः ॥ २५ ॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

इतश्चानुपपन्नो वैनाशिकसमयः, यतः स्थिरमनुयायिकारणमनभ्युपगच्छतामभावाद्भावोत्पत्तिरित्येतदापद्यते । दर्शयन्ति चाभावाद्भावोत्पत्तिम्—'नानुपमृद्य प्रादुर्भावात्' इति । विनष्टाद्धि किल बीजादङ्कुर उत्पद्यते, तथा विनष्टात्क्षीराद्दधि, मृत्पिण्डाच्च घटः । कूटस्थाच्चेत्कारणात्कार्यमुत्पद्येताविशेषात्सर्वं सर्वत उत्पद्येत । तस्मादभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पद्यमानत्वादभावाद्भावोत्पत्तिरिति मन्यन्ते । तत्रेदमुच्यते—'नासतोऽदृष्टत्वात्' इति नाभावाद्भाव उत्पद्यते । यद्यभावाद्भाव उत्पद्येताभावत्वाविशेषात्कारणविशेषाभ्युपगमोऽनर्थकः स्यात् । नहि बीजादीनामुपमृदितानां योऽभावस्तस्याभावस्य शशविषाणादीनां च निःस्वभावत्वाविशेषादभावत्वे कश्चिद्विशेषोऽस्ति, येन बीजादेवाङ्कुरो जायते क्षीरादेव दधीत्येवंजातीयकः कारणविशेषाभ्युपगमोऽर्थवान्स्यात् । निर्विशेषस्य त्वभावस्य कारणत्वाभ्युपगमे शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन् । नचैवं दृश्यते । यदि पुनरभावस्यापि विशेषोऽभ्युपगम्येतोत्पलादीनामिव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नीलत्वादिस्ततो विशेषवत्त्वादेवाभावस्य भावत्वमुत्पलादिवत् । नाप्यभावः कस्यचिदुत्पत्तिहेतुः स्यात्, अभावत्वादेव, शशविषाण... अभावाच्च भावोत्पत्तावभावान्वितमेव सर्वं कार्यं स्यात् । नचैवं... सर्वस्य च वस्तुनः स्वेन स्वेन रूपेण भावात्मनैवोपलभ्यमानत्वात्... मृदन्विताः शरावादयो भावास्तन्त्वादिविकाराः केनचिदभ्यु... मृद्विकारानेव तु मृदन्वितान्भावांल्लोकः प्रत्येति । यत्तूक्तं स्वरू... न्तरेण कस्यचित्कूटस्थस्य वस्तुनः कारणत्वानुपपत्तेरभावाद्भावो... तुमर्हतीति । तद्दुरुक्तम् । स्थिरस्वभावानामेव सुवर्णादीनां प्रत्य... नानां रुचकादिकार्यकारणभावदर्शनात् । येष्वपि बीजादिषु... मर्दो लक्ष्यते तेष्वपि नाऽसावुपमृद्यमाना पूर्वावस्थोत्तरावस्था... मभ्युपगम्यते, अनुपमृद्यमानानामेवानुयायिनां बीजाद्यवयवा... दिकारणभावाभ्युपगमात् । तस्मादसद्भ्यः शशविषाणादिभ्यः... दर्शनात्सद्भ्यश्च सुवर्णादिभ्यः सदुत्पत्तिदर्शनादनुपपन्नोऽयम... त्पत्त्यभ्युपगमः । अपिच चतुर्भिश्चित्तचैत्ता उत्पद्यन्ते, प... भूतभौतिकलक्षणः समुदाय उत्पद्यत इत्यभ्युपगम्य पुनरभावा... कल्पयद्भिरभ्युपगतमपह्नुवानैर्वैनाशिकैः सर्वो लोक आकुली...

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

यदि चाभावाद्भावोत्पत्तिरभ्युपगम्येत, एवंसत्युदासीना... नानामपि जनानामभिमतसिद्धिः स्यात् । अभावस्य सुलभत्वा... वलस्य क्षेत्रकर्मण्यप्रयतमानस्यापि सस्यनिष्पत्तिः स्यात् । ... मृत्संस्क्रियायामप्रयतमानस्याप्यमत्रोत्पत्तिः । तन्तुवायस्यापि ... नस्यापि तन्वानस्येव वस्त्रलाभः । स्वर्गापवर्गयोश्च न कश्चित्क... हेत । नचैतद्युज्यतेऽभ्युपगम्यते वा केनचित् । तस्माद्प्यनुप... वाद्भावोत्पत्त्यभ्युपगमः ॥ २७ ॥

---

१ अनीहमानानां प्रयत्नशून्यानाम् । २ अमत्रं घटादिपात्रम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## ५ अभावाधिकरणम् । सू० २८–३२

## नाभाव उपलब्धेः ॥ २८ ॥

एवं बाह्यार्थवादमाश्रित्य समुदायाप्राप्त्यादिषु दूषणेषूद्भावितेषु विज्ञानवादी बौद्ध इदानीं प्रत्यवतिष्ठते । केषांचित्किल विनेयानां बाह्ये वस्तुन्यभिनिवेशमालक्ष्य तदनुरोधेन बाह्यार्थवादप्रक्रियेयं विरचिता । नासौ सुगताभिप्रायः । तस्य तु विज्ञानैकस्कन्धवाद एवाभिप्रेतः । तस्मिंश्च विज्ञानवादे बुद्ध्यारूढेन रूपेणान्तस्थ एव प्रमाणप्रमेयफलव्यवहारः सर्व उपपद्यते । सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण प्रमाणादिव्यवहारानवतारात् । कथं पुनरवगम्यतेऽन्तस्थ एवायं सर्वव्यवहारो न विज्ञानव्यतिरिक्तो बाह्योऽर्थोऽस्तीति । तदसंभवादित्याह । स हि बाह्योऽर्थोऽभ्युपगम्यमानः परमाणवो वा स्युस्तत्समूहा वा स्तम्भादयः स्युः । तत्र न तावत्परमाणवः स्तम्भादिप्रत्ययपरिच्छेद्या भवितुमर्हन्ति ( परमाण्वाभासज्ञानानुपपत्तेः ) । नापि तत्समूहाः स्तम्भादयः, तेषां परमाणुभ्योऽन्यत्वानन्यत्वाभ्यां निरूपयितुमशक्यत्वात् । एवं जात्यादीनपि प्रत्याचक्षीत । अपिचानुभवमात्रेण साधारणात्मनो ज्ञानस्य जायमानस्य योऽयं प्रतिविषयं पक्षपातः[1] स्तम्भज्ञानं कुड्यज्ञानं घटज्ञानं पटज्ञानमिति, नासौ ज्ञानगतविशेषमन्तरेणोपपद्यत इत्यवश्यं विषयसारूप्यं ज्ञानस्याङ्गीकर्तव्यम् । अङ्गीकृते च तस्मिन्विषयाकारस्य ज्ञानेनैवावरुद्धत्वादपार्थिका बाह्यार्थसद्भावकल्पना । अपिच सहोपलम्भनियमादभेदो विषयविज्ञानयोरापतति । नह्यनयोरेकस्यानुपलम्भेऽन्यस्योपलम्भोऽस्ति । नचैतत्स्वभावविवेके युक्तं, प्रतिबन्धकारणाभावात् । तस्मादप्यर्थाभावः । स्वप्नादिवच्चेदं द्रष्टव्यम् । यथाहि स्वप्नमायामरीच्युदकगन्धर्वनगरादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितगोचरा अपि स्तम्भादिप्रत्यया भवितुमर्हन्तीत्यवगम्यते । प्रत्ययत्वाविशेषात् । कथं पुनरसति बाह्यार्थे प्रत्ययवैचित्र्यमुपपद्यते । वासनावैचित्र्यादित्याह । अनादौ हि संसारे बीजाङ्कुरवद्विज्ञानानां वासनानां चान्योन्य-

---

१ पक्षपातो विषयविशेषवैशिष्ट्यव्यवहारः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निमित्तनैमित्तिकभावेन वैचित्र्यं न विप्रतिषिध्यते । अपि चान्व-
काभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवगम्यते । स्वप्नादि-
ध्यर्थं वासनानिमित्तस्य ज्ञानवैचित्र्यस्योभाभ्यामप्यावाभ्यामभ्यु-
नत्वात् । अन्तरेण तु वासनामर्थनिमित्तस्य ज्ञानवैचित्र्यस्य मया-
म्यमानत्वात् । तस्मादप्यभावो बाह्यार्थस्येति । एवं प्राप्ते ब्रूमः—
उपलब्धेः' इति । न खल्वभावो बाह्यार्थस्यार्थस्याध्यवसातुं श-
कस्मात् । उपलब्धेः । उपलभ्यते हि प्रतिप्रत्ययं बाह्योऽर्थः स्त-
घटः पट इति । नचोपलभ्यमानस्यैवाभावो भवितुमर्हति ।
कश्चिद्भुञ्जानो भुजिसाध्यायां तृप्तौ स्वयमनुभूयमानायामेवं
भुञ्जे न वा तृप्यामीति, तद्वदिन्द्रियसंनिकर्षेण स्वयमुपलभ-
बाह्यमर्थं नाहमुपलभे नच सोऽस्तीति ब्रुवन्कथमुपादेयवचनः
ननु नाहमेवं ब्रवीमि न कंचिदर्थमुपलभ इति किं तूपलब्धि-
नोपलभ इति ब्रवीमि । बाढमेवं ब्रवीषि निरङ्कुशत्वात्ते तुण्ड-
युक्त्युपेतं ब्रवीषि । यत उपलब्धिव्यतिरेकोऽपि बलादर्थस्याभ्यु-
उपलब्धेरेव । नहि कश्चिदुपलब्धिमेव स्तम्भः कुड्यं चेत्युपलभ-
लब्धिविषयत्वेनैव तु स्तम्भकुड्यादीन्सर्वे लौकिका उपलभन्ते
श्चैवमेव सर्वे लौकिका उपलभन्ते यत्प्रत्याचक्षाणा अपि
व्याचक्षते यदन्तर्ज्ञेयरूपं तद्बहिर्वदवभासत इति । तेऽपि
सिद्धां बहिरवभासमानां संविदं प्रतिलभमानाः प्रत्याख्या-
बाह्यमर्थं बहिर्वदिति वत्कारं कुर्वन्ति । इतरथा हि कस्माद्ब-
ब्रूयुः । नहि विष्णुमित्रो वन्ध्यापुत्रवदवभासत इति कश्चि-
तस्माद्यथानुभवं तत्त्वमभ्युपगच्छद्भिर्बहिरेवावभासत इति यु-
गन्तुं नतु बहिर्वदवभासत इति । ननु बाह्यस्यार्थस्यासंभवा-
भासत इत्यध्यवसितम् । नायं साध्वध्यवसायो यतः प्रमाण-
त्तिपूर्वकौ संभवासंभवाववधार्येते न पुनः संभवासंभवपूर्वि-
वृत्त्यप्रवृत्ती । यद्धि प्रत्यक्षादीनामन्यतमेनापि प्रमाणेनोपल-
भवति । यत्तु न केनचिदपि प्रमाणेनोपलभ्यते तन्न संभव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथास्वं सर्वैरेव प्रमाणैर्बाह्योऽर्थ उपलभ्यमानः कथं व्यतिरेकाव्यतिरेकादिविकल्पैर्न संभवतीत्युच्येतोपलब्धेरेव । नच ज्ञानस्य विषयसारूप्याद्विषयनाशो भवति, असति विषये विषयसारूप्यानुपपत्तेः, बहिरुपलब्धेश्च विषयस्य । अतएव सहोपलम्भनियमोऽपि प्रत्ययविषययोरुपायोपेयभावहेतुको नाभेदहेतुक इत्यभ्युपगन्तव्यम् । अपिच घटज्ञानं पटज्ञानमिति विशेषणयोरेव घटपटयोर्भेदो न विशेष्यस्य ज्ञानस्य । यथा शुक्लो गौः कृष्णो गौरिति शौक्ल्यकार्ष्ण्ययोरेव भेदो न गोत्वस्य । द्वाभ्यां च भेद एकस्य सिद्धो भवत्येकस्माच्च द्वयोः । तस्मादर्थज्ञानयोर्भेदः । तथा घटदर्शनं घटस्मरणमित्यत्रापि प्रतिपत्तव्यम् । अत्रापि हि विशेष्ययोरेव दर्शनस्मरणयोर्भेदो न विशेषणस्य घटस्य । यथा क्षीरगन्धः क्षीररस इति विशेष्ययोरेव गन्धरसयोर्भेदो न विशेषणस्य क्षीरस्य तद्वत् । अपिच द्वयोर्विज्ञानयोः पूर्वोत्तरकालयोः स्वसंवेदनेनैवोपक्षीणयोरितरेतरग्राह्यग्राहकत्वानुपपत्तिः । ततश्च विज्ञानभेदप्रतिज्ञा क्षणिकत्वादिधर्मप्रतिज्ञा स्वलक्षणसामान्यलक्षणवास्यवासकत्वाऽविद्योपप्लवसदसद्धर्मबन्धमोक्षादिप्रतिज्ञाश्च स्वशास्त्रगतास्ता हीयेरन् । किंचान्यत् । विज्ञानं विज्ञानमित्यभ्युपगच्छता बाह्योऽर्थः स्तम्भः कुड्यमित्येवंजातीयकः कस्मान्नाभ्युपगम्यत इति वक्तव्यम् । विज्ञानमनुभूयत इति चेत् । बाह्योऽप्यर्थोऽनुभूयत एवेति युक्तमभ्युपगन्तुम् । अथ विज्ञानं प्रकाशात्मकत्वात्प्रदीपवत्स्वयमेवानुभूयते न तथा बाह्योऽप्यर्थ इति चेत् । अत्यन्तविरुद्धां स्वात्मनि क्रियामभ्युपगच्छस्यग्निरात्मानं दहतीतिवत्, अविरुद्धं तु लोकप्रसिद्धं स्वात्मव्यतिरिक्तेन विज्ञानेन बाह्योऽर्थोऽनुभूयत इति नेच्छस्यहो पाण्डित्यं महद्दर्शितम् । नचार्थाव्यतिरिक्तमपि विज्ञानं स्वयमेवानुभूयते, स्वात्मनि क्रियाविरोधादेव । ननु विज्ञानस्य स्वरूपव्यतिरिक्तग्राह्यत्वे तदप्यन्येन ग्राह्यं तदप्यन्येनेत्यनवस्था प्राप्नोति । अपिच प्रदीपवदवभासात्मकत्वाज्ज्ञानस्यं ज्ञानान्तरं कल्पयतः समत्वादवभास्यावभासकभावानुपपत्तेः कल्पनानर्थक्यमिति । तदुभयमप्यसत् । विज्ञानग्रहणमात्र एव विज्ञानसाक्षिणो

१ अविद्योपप्लवोऽविद्यासंसर्गः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहणाकाङ्क्षानुत्पादादनवस्थाशङ्कानुपपत्तेः । साक्षिप्रत्यययोश्च वैषम्यादुपलब्ध्रुपलभ्यभावोपपत्तेः । स्वयंसिद्धस्य च साक्षिणोऽ-यत्वात् । किंचान्यत् प्रदीपवद्विज्ञानमवभासकान्तरनिरपेक्षं प्रथत इति ब्रुवताऽप्रमाणगम्यं विज्ञानमनवगन्तृकमित्युक्तं स्यात् घनमध्यस्थप्रदीपसहस्रप्रथनवत् । बाढमेवम्, अनुभवरूपत्वात्तु स्वेष्टो नः पक्षस्त्वयाऽनुज्ञायत इति चेत् । न । अन्यस्यावगन्तृ-साधनस्य प्रदीपादिप्रथनदर्शनात् । अतो विज्ञानस्याप्यवभास्यत्वस्यैवान्यस्मिन्नवगन्तरि प्रथनं प्रदीपवदित्यवगम्यते । साक्षिणः स्वयंसिद्धतामुपक्षिपता स्वयं प्रथते विज्ञानमित्येप एव मम वाचोयुक्त्यन्तरेणाश्रित इति चेत् । न । विज्ञानस्योत्पत्तिप्रध्वंसानेक-शेषवत्त्वाभ्युपगमात् । अतः प्रदीपवद्विज्ञानस्यापि व्यतिरिक्तावग-स्माभिः प्रसाधितम् ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

यदुक्तं बाह्यार्थापलापिना स्वप्नादिप्रत्ययवज्जागरितगोचरा अपि दिप्रत्यया विनैव बाह्येनार्थेन भवेयुः प्रत्ययत्वाविशेषादिति । ... व्यम् । अत्रोच्यते—न स्वप्नादिप्रत्ययवज्जाग्रत्प्रत्यया भवितुं कस्मात् । वैधर्म्यात् । वैधर्म्यं हि भवति स्वप्नजागरितयोः । धर्म्यम् । बाधाबाधाविति ब्रूमः । बाध्यते हि स्वप्नोपलब्धं वस्तु द्धस्य मिथ्या मयोपलब्धो महाजनसमागम इति, नह्यस्ति मम नसमागमो निंद्राग्लानं तु मे मनो बभूव तेनैषा भ्रान्तिरु-एवं मायादिष्वपि भवति यथायथं बाधः । नैवं जागरितोपलब्धं स्तम्भादिकं कस्यांचिदप्यवस्थायां बाध्यते । अपिच स्मृतिरेषा नम् । उपलब्धिस्तु जागरितदर्शनम् । स्मृत्युपलब्ध्योश्च प्रत्यक्ष-मनुभूयतेऽर्थविप्रयोगसंप्रयोगात्मकमिष्टं पुत्रं स्मरामि नोपलभे मिच्छामीति । तत्रैवंसति न शक्यते वक्तुं मिथ्या जागरितो-

१ निद्राग्लानमिति करणदोषाभिधानम् । २ संस्कारमात्रजं हि विज्ञानं ... ३ प्रमाणजोऽनुभव उपलब्धिः ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लब्धित्वात्स्वप्नोपलब्धिवदित्युभयोरन्तरं स्वयमनुभवता। नच स्वानुभवापलापः प्राज्ञमानिभिर्युक्तः कर्तुम्। अपिचानुभवविरोधप्रसङ्गाज्जागरितप्रत्ययानां स्वतो निरालम्बनतां वक्तुमशक्नुवता स्वप्नप्रत्ययसाधर्म्याद्वक्तुमिष्यते। नच यो यस्य स्वतो धर्मो न संभवति सोऽन्यस्य साधर्म्यात्तस्य संभविष्यति। नह्यग्निरुष्णोऽनुभूयमान उदकसाधर्म्याच्छीतो भविष्यति। दर्शितं तु वैधर्म्यं स्वप्नजागरितयोः ॥ २९ ॥

न भावोऽनुपलब्धेः ॥ ३० ॥

यदप्युक्तं विनाप्यर्थेन ज्ञानवैचित्र्यं वासनावैचित्र्यादेवावकल्प्यत इति। तत्प्रतिवक्तव्यम्। अत्रोच्यते—न भावो वासनानामुपपद्येत त्वत्पक्षेऽनुपलब्धेर्बाह्यानामर्थानाम्। अर्थोपलब्धिनिमित्ता हि प्रत्यर्थं नानारूपा वासना भवन्ति। अनुपलभ्यमानेषु त्वर्थेषु किंनिमित्ता विचित्रा वासना भवेयुः। अनादित्वेऽप्यन्धपरंपरान्यायेनाप्रतिष्ठैवानवस्था व्यवहारलोपिनी स्यान्नाभिप्रायसिद्धिः। यावप्यन्वयव्यतिरेकावर्थापलापिनोपन्यस्तौ वासनानिमित्तमेवेदं ज्ञानजातं नार्थनिमित्तमिति, तावप्येवंसति प्रत्युक्तौ द्रष्टव्यौ। विनार्थोपलब्ध्या वासनानुपपत्तेः। अपिच विनापि वासनाभिरर्थोपलब्ध्युपगमाद्विना त्वर्थोपलब्ध्या वासनोत्पत्त्यनभ्युपगमादर्थसद्भावमेवान्वयव्यतिरेकावपि प्रतिष्ठापयतः। अपिच वासना नाम संस्कारविशेषाः। संस्काराश्च नाश्रयमन्तरेणावकल्पन्ते। एवं लोके दृष्टत्वात्। नच तव वासनाश्रयः कश्चिदस्ति प्रमाणतोऽनुपलब्धेः ॥ ३० ॥

क्षणिकत्वाच्च ॥ ३१ ॥

यदप्यालयविज्ञानं नाम वासनाश्रयत्वेन परिकल्पितं तदपि क्षणिकत्वाभ्युपगमादनवस्थितस्वरूपं सत्प्रवृत्तिविज्ञानवन्न वासनानामधिकरणं भवितुमर्हति। नहि कालत्रयसंबन्धिन्येकस्मिन्नन्वयिन्यसति कूटस्थे वा सर्वार्थदर्शिनि देशकालनिमित्तापेक्षवासनाधानस्मृतिप्रतिसंधानादिव्यवहारः संभवति। स्थिरस्वरूपत्वे त्वालयविज्ञानस्य सिद्धान्तहानिः। अपिच विज्ञानवादेऽपि क्षणिकत्वाभ्युपगमस्य समानत्वाद्यानि बाह्यार्थवादे क्षणि-

---

१ भाव उत्पत्तिः सत्ता वा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कत्वनिबन्धनानि दूषणान्युद्भावितानि 'उत्तरोत्पादे च पूर्वनिरोधात्' सर्वत्र
वमादीनि तानीहाप्यनुसंधातव्यानि । एवमेतौ द्वावपि वैनाशिकपक्षौ
निराकृतौ बाह्यार्थवादिपक्षो विज्ञानवादिपक्षश्च । शून्यवादिपक्षस्तु सर्व
प्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते, नह्ययं सर्वप्रमा
णप्रसिद्धो लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुम्, अपवादाभावे
उत्सर्गप्रसिद्धेः ॥ ३१ ॥

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

किं बहुना । सर्वप्रकारेण यथायथायं वैनाशिकसमय उपपत्तिमत्त्वाय
परीक्ष्यते तथातथा सिकताकूपवद्विदीर्यत एव । न कांचिदप्यत्रोपपत्तिं
पश्यामः । अतश्चानुपपन्नो वैनाशिकतन्त्रव्यवहारः । अपिच बाह्यार्थविज्ञान
ज्ञानशून्यवादत्रयमितरेतरविरुद्धमुपदिशता सुगतेन स्पष्टीकृतमात्मनोऽसंब
वद्धप्रलापित्वं, प्रद्वेषो वा प्रजासु विरुद्धार्थप्रतिपत्त्या विमुह्येयुरिमाः
प्रजा इति । सर्वथाप्यनादरणीयोऽयं सुगतसमयः श्रेयस्कामैरित्य
प्रायः ॥ ३२ ॥

### ६ एकस्मिन्नसंभवाधिकरणम् । सू० ३३-३६

## नैकस्मिन्नसंभवात् ॥ ३३ ॥

निरस्तः सुगतसमयः । विवसनसमय इदानीं निरस्यते । सप्त चैषां
पदार्थाः संमता जीवाजीवास्रवसंवरनिर्जरबन्धमोक्षा नाम । संक्षेपतस्तु
द्वावेव पदार्थौ जीवाजीवाख्यौ । यथायोगं तयोरेवेतरान्तर्भावादिति
मन्यन्ते । तयोरिममपरं प्रपञ्चमाचक्षते पञ्चास्तिकाया नाम—जीवास्ति
कायः पुद्गलास्तिकायो धर्मास्तिकायोऽधर्मास्तिकाय आकाशास्तिकायश्च ।
सर्वेषामप्येषामवान्तरप्रभेदान्बहुविधान्स्वसमयपरिकल्पितान्वर्णयन्ति ।

---

१ नादरः क्रियते सूत्रान्तराणि न रच्यन्त एतान्येवावृत्त्या योज्यन्ते । २
अत्र प्रजा प्राह्याः । ३ जीवाजीवौ भोक्तृभोग्यौ, विषयाभिमुख्येनेन्द्रिय
रास्रवः, तां संवृणोतीति संवरो यमनियमादिः, निर्जरयति नाशयति
निर्जरस्तप्तशिलारोहणादिः, बन्धः कर्म, मोक्षः कर्मपाशनाशे सत्यलोका
सततोर्ध्वगमनम् । ४ अस्तिकायशब्दः सांकेतिकः पदार्थवाची । जीवश्चासौ
श्चेति विग्रहः । ५ पूर्यन्ते गलन्तीति पुद्गलाः परमाणुसंघाः कायाः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वत्र चेमं सप्तभङ्गीनयं नाम न्यायमवतारयन्ति । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यश्च, स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च नास्ति चावक्तव्यश्चेति । एवमेवैकत्वनित्यत्वादिष्वपीमं सप्तभङ्गीनयं योजयन्ति । अत्राचक्ष्महे—नायमभ्युपगमो युक्त इति । कुतः । एकस्मिन्नसंभवात् । नह्येकस्मिन्धर्मिणि युगपत्सदसत्त्वादिविरुद्धधर्मसमावेशः संभवति शीतोष्णवत् । य एते सप्तपदार्था निर्धारिता एतावन्त एवंरूपाश्चेति ते तथैव वा स्युर्नैव वा तथा स्युः । इतरथा हि तथा वा स्युरतथा वेत्यनिर्धारितरूपं ज्ञानं संशयज्ञानवदप्रमाणमेव स्यात् । नन्वनेकात्मकं वस्त्विति निर्धारितरूपमेव ज्ञानमुत्पद्यमानं संशयज्ञानवन्नाप्रमाणं भवितुमर्हति । नेति ब्रूमः । निरङ्कुशं ह्यनेकान्तत्वं सर्ववस्तुषु प्रतिजानानस्य निर्धारणस्यापि वस्तुत्वाविशेषात्स्यादस्ति स्यान्नास्तीत्यादिविकल्पोपनिपातादनिर्धारणात्मकतैव स्यात् । एवं निर्धारयितुर्निर्धारणफलस्य च स्यात्पक्षेऽस्तिता स्याच्च पक्षे नास्तितेति । एवंसति कथं प्रमाणभूतः संस्तीर्थकरः प्रमाणप्रमेयप्रमातृप्रमितिष्वनिर्धारितासूपदेष्टुं शक्नुयात् । कथं वा तदभिप्रायानुसारिणस्तदुपदिष्टेऽर्थेऽनिर्धारितरूपे प्रवर्तेरन् । ऐकान्तिकफलत्वनिर्धारणे हि सति तत्साधनानुष्ठानाय सर्वो लोकोऽनाकुलः प्रवर्तते नान्यथा । अतश्चानिर्धारितार्थं शास्त्रं प्रणयन्मत्तोन्मत्तवदनुपादेयवचनः स्यात् । तथा पञ्चानामस्तिकायानां पञ्चत्वसंख्यास्ति वा नास्ति वेति विकल्प्यमाना स्यात्तावदेकस्मिन्पक्षे, पक्षान्तरे तु न स्यादित्यतो न्यूनसंख्यात्वमधिकसंख्यात्वं वा प्राप्नुयात् । नचैषां पदार्थानामवक्तव्यत्वं संभवति । अवक्तव्याश्चेन्नोच्येरन् । उच्यन्ते चावक्तव्याश्चेति विप्रतिषिद्धम् । उच्यमानाश्च तथैवावधार्यन्ते नावधार्यन्त इति च । तथा तदवधारणफलं सम्यग्दर्शनमस्ति वा नास्ति वा, एवं तद्विपरीतमसम्यग्दर्शनमप्यस्ति वा नास्ति वेति प्रलपन्मत्तोन्मत्तपक्षस्यैव स्यान्न प्रत्यायितव्यपक्षस्य । स्वर्गापवर्गयोश्च पक्षे भावः पक्षे चाभावस्तथा पक्षे नित्यता पक्षे चानित्यतेत्यनवधारणायां प्रवृत्त्यनुपपत्तिः । अनादिसिद्धजीवप्रभृ-

१ सप्तानामस्तित्वादीनां भङ्गानां समाहारः सप्तभङ्गी तस्या नयो न्यायः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तीनां च स्वशास्त्रावधृतस्वभावानामयथावधृतस्वभावत्वप्रसङ्गः । ... वादिषु पदार्थेष्वेकस्मिन्धर्मिणि सत्त्वासत्त्वयोर्विरुद्धयोर्धर्मयो ... सत्त्वे चैकस्मिन्धर्मेऽसत्त्वस्य धर्मान्तरस्यासंभवादसत्त्वे चै... स्यासंभवादसंगतमिदमार्हतं मतम् । एतेनैकानेकनित्यानित्यव्यतिरिक्ताव्य... तिरिक्ताद्यनेकान्ताभ्युपगमा निराकृता मन्तव्याः । यत्तु पुद्गल... ऽणुभ्यः संघाताः संभवन्तीति कल्पयन्ति तत्पूर्वेणैवाणुवाद... निराकृतं भवतीत्यतो न पृथक्तन्निराकरणाय प्रयत्यते ॥ ३३ ॥

**एवं चात्माऽकार्त्स्न्यम् ॥ ३४ ॥**

यथैकस्मिन्धर्मिणि विरुद्धधर्मासंभवो दोषः स्याद्वादे प्रसक्त... त्मनोऽपि जीवस्याकार्त्स्न्यमपरो दोषः प्रसज्येत । कथम् । शरीरपरिमा... णो हि जीव इत्यार्हता मन्यन्ते । शरीरपरिमाणतायां च सत्या... सर्वगतः परिच्छिन्न आत्मेत्यतो घटादिवदनित्यत्वमात्मनः प्रसज्येत । शरी... राणां चानवस्थितपरिमाणत्वान्मनुष्यजीवो मनुष्यशरीरपरिमाणो भूत्वा पुनः केनचित्कर्मविपाकेन[1] हस्तिजन्म प्राप्नुवन्न कृत्स्नं हस्तिशरीरं व्याप्नु... यात् । पुत्तिकाजन्म च प्राप्नुवन्न कृत्स्नः पुत्तिकाशरीरे संमीयेत । समान एष एकस्मिन्नपि जन्मनि कौमारयौवनस्थाविरेषु दोषः । स्यादेतत् । अनन्तावयवो जीवस्तस्य त एवावयवा अल्पे शरीरे संकुचेयुर्महति च विकसेयुरिति । तेषां पुनरनन्तानां जीवावयवानां समानदेशत्वं प्रतिह... न्यते वा न वेति वक्तव्यम् । प्रतिघाते तावन्नानन्तावयवाः परिच्छिन्ने देशे संमीयेरन् । अप्रतिघातेऽप्येकावयवदेशत्वोपपत्तेः सर्वेषामवयवानां प्रथि... मानुपपत्तेर्जीवस्याणुमात्रत्वप्रसङ्गः स्यात् । अपिच शरीरमात्रपरिच्छिन्नानां जीवावयवानामानन्त्यं नोत्प्रेक्षितुमपि शक्यम् ॥ ३४ ॥

अथ पर्यायेण बृहच्छरीरप्रतिपत्तौ केचिज्जीवावयवा उपगच्छन्ति त... नुशरीरप्रतिपत्तौ च केचिदपगच्छन्तीत्युच्येत, तत्राप्युच्यते—

**नच पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥**

नच पर्यायेणाप्यवयवोपगमापगमाभ्यामेतद्देहपरिमाणत्वं ...

[1] कर्मविपाकः कर्मणामभिव्यक्तिः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan...

रोधेनोपपादयितुं शक्यते । कुतः । विकारादिदोषप्रसङ्गात् । अवयवोपगमापगमाभ्यां ह्यनिशमापूर्यमाणस्यापक्षीयमाणस्य च जीवस्य विक्रियावत्त्वं तावदपरिहार्यम्, विक्रियावत्त्वे च चर्मादिवदनित्यत्वं प्रसज्येत । ततश्च बन्धमोक्षाभ्युपगमो बाध्येत कर्माष्टकपरिवेष्टितस्य जीवस्यालाबुवत्संसारसागरे निमग्नस्य बन्धनोच्छेदादूर्ध्वगामित्वं भवतीति । किंचान्यत् । आगच्छतामपगच्छतां चावयवानामागमापायधर्मवत्त्वादेवानात्मत्वं शरीरादिवत् । ततश्चावस्थितः कश्चिदवयव आत्मेति स्यात् । नच स निरूपयितुं शक्यतेऽयमसाविति । किंचान्यत् । आगच्छन्तश्चैते जीवावयवाः कुतः प्रादुर्भवन्त्यपगच्छन्तश्च क वा लीयन्त इति वक्तव्यम् । नहि भूतेभ्यः प्रादुर्भवेयुर्भूतेषु च निलीयेरन्, अभौतिकत्वाज्जीवस्य । नापि कश्चिदन्यः साधारणोऽसाधारणो वा जीवानामवयवाधारो निरूप्यते प्रमाणाभावात् । किंचान्यत् । अनवधृतस्वरूपश्चैवंसत्यात्मा स्यात् । आगच्छतामपगच्छतां चावयवानामनियतपरिमाणत्वात् । अत एवमादिदोषप्रसङ्गान्न पर्यायेणाप्यवयवोपगमापगमावात्मन आश्रयितुं शक्येते । अथवा पूर्वेण सूत्रेण शरीरपरिमाणस्यात्मन उपचितापचितशरीरान्तरप्रतिपत्तावकात्स्र्न्यप्रसञ्जनद्वारेणानित्यतायां चोदितायां पुनः पर्यायेण परिमाणानवस्थानेऽपि स्रोतःसंताननित्यतान्यायेनात्मनो नित्यता स्यात् । यथा रक्तपटानां विज्ञानानवस्थानेऽपि तत्संताननित्यता तद्वद्विसिचामपीत्याशङ्क्यानेन सूत्रेणोत्तरमुच्यते । संतानस्य तावदवस्तुत्वे नैरात्म्यवादप्रसङ्गः । वस्तुत्वेऽप्यात्मनो विकारादिदोषप्रसङ्गादस्य पक्षस्यानुपपत्तिरिति ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥

अपिचान्त्यस्य मोक्षावस्थाभाविनो जीवपरिमाणस्य नित्यत्वमिष्यते जैनैः । तद्वत्पूर्वयोरप्याद्यमध्यमयोर्जीवपरिमाणयोर्नित्यत्वप्रसङ्गादविशेषप्रसङ्गः स्यात् । एकशरीरपरिमाणतैव स्यान्नोपचितापचितशरीरान्तर-

---

१ देहभेदेन परिमाणस्यात्मनस्थानवस्थानेऽपि नाशेऽपि स्रोतःप्रवाहः । २ विगतं सिचः वस्त्रं येभ्यस्ते विसिचो दिगम्बरास्तेषामित्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्तिः । अथवान्त्यस्य जीवपरिमाणस्यावस्थितत्वात्पूर्वयोरप्यव-
स्थितपरिमाण एव जीवः स्यात्, ततश्चाविशेषेण सर्वदैवाणुर्महान्
वोऽभ्युपगन्तव्यो न शरीरपरिमाणः । अतश्च सौगतवदार्हतमपि
संगतमित्युपेक्षितव्यम् ॥ ३६ ॥

### ७ पत्यधिकरणम् । सू० ३७–४१

### पत्युरसामञ्जस्यात् ॥ ३७ ॥

इदानीं केवलाधिष्ठात्रीश्वरकारणवादः प्रतिषिध्यते । तत्कथम
'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्', 'अभिध्योपदेशाच्च' (ब्र० १
२४ ) इत्यत्र प्रकृतिभावेनाधिष्ठातृभावेन चोभयस्वभावस्येश्वरस्य
वाचार्येण प्रतिष्ठापितत्वात् । यदि पुनरविशेषेणेश्वरकारणवादः
प्रतिषिध्येत पूर्वोत्तरविरोधाद्व्याहताभिव्याहारः सूत्रकार इत्येतद्
तस्मादप्रकृतिरधिष्ठाता केवलं निमित्तकारणमीश्वर इत्येष पक्षो
विहितब्रह्मैकत्वप्रतिपक्षत्वाद्यत्नेनात्र प्रतिषिध्यते । सा चेयं वे
कल्पनानेकप्रकारा । केचित्तावत्सांख्ययोगव्यपाश्रयाः[1] कल्पयन्ति
पुरुषयोरधिष्ठाता केवलं निमित्तकारणमीश्वर इतरेतरविलक्षणाः
पुरुषेश्वरा इति । माहेश्वरास्तु[2] मन्यन्ते कार्यकारणयोगविधि
पञ्च पदार्थाः पशुपतिनेश्वरेण पशुपाशविमोक्षणायोपदिष्टाः[3]
श्वरो निमित्तकारणमिति वर्णयन्ति । तथा वैशेषिकादयोऽपि
चित्स्वप्रक्रियानुसारेण निमित्तकारणमीश्वर इति वर्णयन्ति ।
मुच्यते—'पत्युरसामञ्जस्यात्' इति । पत्युरीश्वरस्य प्रधानपुरु
ष्ठातृत्वेन जगत्कारणत्वं नोपपद्यते । कस्मात् । असामञ्जस्या
पुनरसामञ्जस्यम् । हीनमध्यमोत्तमभावेन हि प्राणिभेदान्विदधतः
रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत । प्राणि
त्वाददोष इति चेत् । न । कर्मेश्वरयोः प्रवर्त्यप्रवर्तयितृत्वे

---

१ सांख्ययोगव्यपाश्रयाः हिरण्यगर्भपतञ्जलिप्रभृतयः । २ माहेश्वराः
पाशुपताः, कारुणिकसिद्धान्तिनः, कापालिकाश्चेति । ३ पशवो जीवाः
स्तन्नाशायेत्यर्थः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दोषप्रसङ्गात् । नानादित्वादिति चेत् । न । वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः । अपिच 'प्रवर्तनालक्षणा दोषाः' ( न्यायसू० १।१।१८ ) इति न्यायवित्समयः । नहि कश्चिददोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते । स्वार्थप्रयुक्त एव च सर्वो जनः परार्थेऽपि प्रवर्तत इत्येवमप्यसामञ्जस्यं, स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात् । पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम् ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

पुनरप्यसामञ्जस्यमेव । नहि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण संबन्धं प्रधानपुरुषयोरीशिता । न तावत्संयोगलक्षणः संबन्धः संभवति, प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च । नापि समवायलक्षणः संबन्धः, आश्रयाश्रयिभावानिरूपणात् । नाप्यन्यः कश्चित्कार्यगम्यः संबन्धः, शक्यते कल्पयितुं, कार्यकारणभावस्यैवाद्याप्यसिद्धत्वात् । ब्रह्मवादिनः कथमिति चेत् । न । तस्य तादात्म्यलक्षणसंबन्धोपपत्तेः । अपिचागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमिति नियमोऽस्ति । परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्यातिशयः । परस्यापि सर्वज्ञप्रणीतागमसद्भावात्समानमागमबलमिति चेत् । न । इतरेतराश्रयत्वप्रसङ्गादागमप्रत्ययात्सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरिति । तस्मादनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना । एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासंभवमसामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत् । नचैवमुपपद्यते । ह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति मृदादिवैलक्षण्यात् ॥ ३९ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

स्यादेतत् । यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं
पोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्यतीति । तथापि नोपपद्यते
गादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते । नचात्र भो[1]
श्यन्ते । करणग्रामसाम्ये वाभ्युपगम्यमाने संसारिणामिवेश्वरस्य
गादयः प्रसज्येरन् । अन्यथा वा सूत्रद्वयं व्याख्यायते—'अधि
पपत्तेश्च' इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । साधिष्ठानो
सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते न निरधिष्ठानः । अतश्च त
शेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किंचिच्छरीरं क
वर्णयितव्यं स्यात् । नच तद्वर्णयितुं शक्यते । सृष्ट्युत्तरकालभावि
रीरस्य प्राक्सृष्टेस्तदनुपपत्तेः । निरधिष्ठानत्वे चेश्वरस्य प्रवर्तक
त्तिः । एवं लोके दृष्टत्वात् । 'क[2]रणवच्चेन्न भोगादिभ्यः' । अथ
नानुसारेणेश्वरस्यापि किंचित्करणानामायतनं शरीरं कामेन कल्प्ये
मपि नोपपद्यते । सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गा
प्यनीश्वरत्वं प्रसज्येत ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य । स हि सर्वज्ञ
गम्यतेऽनन्तश्च । अनन्तं च प्रधानमनन्ताश्च पुरुषा मिथो भिन्ना
पगम्यन्ते । तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चे
च्छिद्येत वा न वा परिच्छिद्येत । उभयथापि दोषोऽनुषक्त एव ।
पूर्वस्मिंस्तावद्विकल्प इयत्तापरिच्छिन्नत्वात्प्रधानपुरुषेश्वराणाम
वश्यंभाव्येवं लोके दृष्टत्वात् । यद्धि लोक ई[3]यत्तापरिच्छिन्नं व
दि तदन्तवद्दृष्टं तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्न
त्स्यात् । संख्यापरिमाणं तावत्प्रधानपुरुषेश्वरत्रयरूपेण परि

---

१ भोगः सुखदुःखानुभवः । आदिपदाद्विषयानुभवग्रहः । २ कर...
करणवच्छरीरम् । ३ संख्या वा परिमाणं वेयत्ता ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति । पुरुषगता च महासंख्या । ततश्चेयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारान्मुच्यन्ते तेषां संसारोऽन्तवान्संसारित्वं च तेषामन्तवत् । एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात् । प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारित्वेनाभिमतं तच्छून्यतायामीश्वरः किमधितिष्ठेत् । किंविषये वा सर्वज्ञतेश्वरते स्याताम् । प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सत्यादिमत्त्वप्रसङ्गः । आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः । अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति, तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत । तस्मादप्यसंगतस्तार्किकपरिगृहीत ईश्वरकारणवादः ॥ ४१ ॥

## ८ उत्पत्त्यसंभवाधिकरणम् । सू० ४२–४५

### उत्पत्त्यसंभवात् ॥ ४२ ॥

येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः । येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते । ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः प्रकृतिश्चाधिष्ठाता चेति । श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः । तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति । उच्यते—यद्यप्येवंजातीयकोंऽशः समानत्वान्न विसंवादगोचरो भवत्यस्त्वंशान्तरं विसंवादस्थानमित्यतस्तत्प्रत्याख्यानायारम्भः । तत्र भागवता मन्यन्ते । भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितो वासुदेवव्यूहरूपेण संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च । वासुदेवो नाम परमात्मोच्यते । संकर्षणो नाम जीवः । प्रद्युम्नो नाम मनः । अनिरुद्धो नामाहंकारः । तेषां वासुदेवः परा प्रकृतिरितरे संकर्षणादयः कार्यम् । तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याय-

१ व्यूहो मूर्तिः । २ वाक्कायचेतसामवधानपूर्वकं देवतागृहगमनमभिगमनम् , पूजाद्रव्याणामर्जनमुपादानम् , इज्या पूजा, स्वाध्यायोऽष्टाक्षरादिजपः, योगो ध्यानम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यत इति। त
वदुच्येत योऽसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा
स आत्मनात्मानमनेकधा व्यूह्यावस्थित इति, तन्न निराक्रि
एकधा भवति त्रिधा भवति' (छा० ७।२६।२) इत्यादि
परमात्मनोऽनेकधाभावस्याधिगतत्वात्। यदपि तस्य भगवतो
नादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते, तदपि न
ध्यते। श्रुतिस्मृत्योरीश्वरप्रणिधानस्य प्रसिद्धत्वात्। यत्पुनरि
वासुदेवात्संकर्षण उत्पद्यते संकर्षणाच्च प्रद्युम्नः प्रद्युम्नाच्चानि
अत्र ब्रूमः—न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य
त्पत्तिः संभवति। अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि
नित्यत्वादयो दोषाः प्रसज्येरन्। ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः
कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात्। प्रतिषेधिष्यति चाचार्यो
त्पत्तिम्—'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र० सू० २।३।१७
तस्मादसंगतैषा कल्पना॥ ४२॥

**नच कर्तुः करणम्॥ ४३॥**

इतश्चासंगतैषा कल्पना। यस्मान्न हि लोके कर्तुर्देवदत्तादेः क
श्चाद्युत्पद्यमानं दृश्यते। वर्णयन्ति च भागवताः कर्तुर्जीवात्सं
कात्करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते। कर्तृजाच्च तस्मादनिरुद्ध
कार उत्पद्यत इति। नचैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः
भूतां श्रुतिमुपलभामहे॥ ४३॥

**विज्ञानादिभावे वा तदप्रतिषेधः॥ ४४॥**

अथापि स्यान्न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते
श्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वरैर्धर्मैरन्विता
गम्यन्ते वासुदेवा एवैते सर्वे निर्दोषा निरधिष्ठाना निरवद्या
स्मान्नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोतीति। अत्रोच्य

१ निर्दोषा रागादिशून्याः, निरधिष्ठानाः प्रकृत्यजन्याः, निरवद्या नाशादि

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

मपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः । कथम् । यदि तावदयमभिप्रायः—परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति,ततोऽनेकेश्वरकल्पनानर्थक्यम्, एकेनैवेश्वरेणेश्वरकार्यसिद्धेः । सिद्धान्तहानिश्च । भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात् । अथायमभिप्राय एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तथापि तदवस्थ एवोत्पत्त्यसंभवः । नहि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति संकर्षणाच्च प्रद्युम्नस्य प्रद्युम्नाच्चानिरुद्धस्य, अतिशयाभावात् । भवितव्यं हि कार्यकारणयोरतिशयेन यथा मृद्घटयोः । नह्यसत्यतिशये कार्यं कारणमित्यवकल्पते । नच पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिष्वेकस्मिन्सर्वेषु वा ज्ञानैश्वर्यादितारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते । वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते । नचैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्, ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥ ४४ ॥

विप्रतिषेधाच्च ॥ ४५ ॥

विप्रतिषेधश्चास्मिञ्छास्त्रे बहुविध उपलभ्यते गुणगुणित्वकल्पनादिलक्षणः । ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात् । वेदविप्रतिषेधश्च भवति । चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात् । तस्मादसंगतैषा कल्पनेति सिद्धम् ॥४५॥ इति श्रीगोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥ २ ॥

॥ इति द्वितीयाध्यायस्य सांख्यादिमतानां दुष्टत्वप्रदर्शनं नाम द्वितीयः पादः ॥

---

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# द्वितीयाध्याये तृतीयः पादः ।

[ अत्र पादे पञ्चमहाभूतजीवादिश्रुतीनां विरोधपरिहारः। ]

## १ वियदधिकरणम् । सू० १–७

### न वियदश्रुतेः ॥ १ ॥

वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते । केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न । तथा केचिद्वायोरुत्पत्तिमामनन्ति, केचिन्न । एवं जीवस्य प्राणानां च । एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते । विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितम्, तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते । तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव । तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते—किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति । तत्र तावत्प्रतिपद्यते—'न वियदश्रुतेः' इति । न खल्वाकाशमुत्पद्यते । कस्मात् । अश्रुतेः । नह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति । छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' ( छा० ६।२।१ ) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत'...'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इति च पञ्चानां महाभूतानां वायुमाकाशं च तेज आदिं कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते । श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ । नचात्र श्रुतिरस्त्याकाशस्योत्पादिनी । तस्मान्नास्त्याकाशस्योत्पत्तिरिति ॥ १ ॥

### अस्ति तु ॥ २ ॥

तुशब्दः पक्षान्तरपरिग्रहे । मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः, श्रुत्यन्तरे त्वस्ति । तैत्तिरीयका हि समामनन्ति—'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० २।१ ) इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इति । ततश्च श्रुत्योर्विप्रतिषेधः क्वचित्तेजःप्रमुखा सृष्टिः क्वचिदाकाशप्रमुखेति । नन्वेकवाक्यतानयोः श्रुत्योर्युक्ता । सत्यम् । सा युक्ता, न तु सावगन्तुं शक्यते । कुतः । 'तत्तेजोऽसृजत' ( छा० ६।२।३ )

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

च्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः 'तत्तेजोऽसृजत', 'तदाकाशमसृजत' इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते, यथा सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामि। नैवं युज्यते । प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते तैत्तिरीयके चाकाशस्य । नचोभयोः प्रथमजत्वं संभवति। एतेनेतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इत्यत्रापि तस्मादाकाशः संभूतस्तस्मात्तेजः संभूतमिति सकृच्छ्रुतस्यापादानस्य संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धानुपपत्तेः। 'वायोरग्निः' (तै० २।१) इति च पृथगाम्नानात् ॥ २॥

अस्मिन्विप्रतिषेधे कश्चिदाह—

## गौण्यसंभवात् ॥ ३ ॥

नास्ति वियत उत्पत्तिरश्रुतेरेव। या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति। कस्मात्। असंभवात्। नह्याकाशस्योत्पत्तिः संभावयितुं शक्या श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु। ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति । समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते। द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति। नचाकाशस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति, यस्मिन्समवायिकारणे सत्यसमवायिकारणे च तत्संयोग आकाश उत्पद्येत । तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति। उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः संभाव्यते प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव पश्चाच्च भवतीति। आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यते। किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्। पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः । तस्माद्यथा लोके आकाशं कुर्वाकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथाच घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इति, एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥ ३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## शब्दाच्च ॥ ४ ॥

शब्दः खल्वाकाशस्याजत्वं ख्यापयति। यत आह—'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ० २।३।३) इति। नह्यमृतस्योत्पत्तिरुपपद्यते। 'आकाशवत्सर्वगतश्च नित्यः' इति चाकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति। न च तादृशस्योत्पत्तिरुपपद्यते। 'स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' इति चोदाहरणम्। 'आकाशशरीरं ब्रह्म' (तै० १।६।२), 'आकाश आत्मा' (तै० १।७।१) इति च। नह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति नीलेनेवोत्पलस्य। तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

इदं पदोत्तरं सूत्रम्। स्यादेतत्। कथं पुनरेकस्य संभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवत्याकाशे गौणत्वमिति। अत उत्तरमुच्यते—स्याच्चैकस्यापि संभूतशब्दस्य विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत्। यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्म' (तै० ३।२) इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोग आनन्दे च मुख्यः। यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या[1] प्रयुज्यतेऽञ्जसा तु विज्ञेये ब्रह्मणि तद्वत्। कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' (छा० ६।२।१) इतीयं प्रतिज्ञा समर्थ्यते। ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति। कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति। तदुच्यते—एकमेवेति तावत्स्वकार्यापेक्षयोपपद्यते। यथा लोके कश्चित्कुम्भकारकुले[2] पूर्वेद्युर्मृद्दण्डचक्रादि चोपलभ्यापरेद्युश्च नानाविधान्यमत्राणि[3] प्रसारितान्युपलभ्य ब्रूयात्मृदेवैकाकिनी पूर्वेद्युरासीदिति स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयान्न दण्डचक्रादि, तद्वदद्वितीयश्रुतिरधिष्ठात्रन्तरं

१ अभेदोपचारो भक्तिः। २ कुलं गृहम्। ३ अमत्राणि घटादीनि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति। नच नभसापि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते । लक्षणान्यत्वनिमित्तं हि नानात्वम् । नच प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्तत्वादिधर्मसामान्यात् । सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते स्तिमितमितरवत्तिष्ठति । तेनान्यत्वमवसीयते । तथाच 'आकाशशरीरं ब्रह्म' ( तै० १।६।२ ) इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः । अतएव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः । अपिच सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा चाव्यतिरिक्तदेशकालमेवाकाशं भवतीति, अतो ब्रह्मणा तत्कार्येण च विज्ञातेन सह विज्ञातमेवाकाशं भवति । यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति, नहि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते, एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वाद्गृहीतमेव ब्रह्मग्रहणेन नभो भवति । तस्माद्भाक्तं नभसः संभवश्रवणमिति ॥ ५ ॥

एवं प्राप्त इदमाह—

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा० ६।१।१) इति, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' (बृ० ४।५।६) इति, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मुण्ड० १।१।३) इति, 'न काचन मद्बहिर्धा विद्यास्ति' इति चैवंरूपा प्रतिवेदान्तं प्रतिज्ञा विज्ञायते । तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात् । व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत । स चाव्यतिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत । शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते । तथाहि—'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते । तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१), 'तदैक्षत', 'तत्तेजोऽसृजत' (छा० ६।२।३)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्शयन्ति—'ऐत
सर्वम्' (छा० ६।८।७) इत्यारभ्याप्रपाठकपरिसमाप्तेः । तद्य
ब्रह्मकार्यं स्यान्न ब्रह्मणि विज्ञात आकाशं विज्ञायेत, ततश्च प्रति
स्यात् । नच प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम् । त
प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ज्ञा
'इदं सर्वं यदयमात्मा' (बृ० २।४।६), 'ब्रह्मैवेदममृतं पुरस्ता
२।२।११) इत्येवमादयः । तस्माज्ज्वलनादिवदेव गगनमप्युत्पद्यते
क्रमश्रुतेर्न वियदुत्पद्यत इति, तदयुक्तं, वियदुत्पत्तिविषय
दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै०
इति । सत्यं दर्शितम् । विरुद्धं तु 'तत्तेजोऽसृजत' इत्यनेन श्रु
न । एकवाक्यत्वात्सर्वश्रुतीनाम् । भवत्वेकवाक्यत्वमविरुद्धानां
तु विरोध उक्तः, सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासं
प्रथमजत्वासंभवाद्विकल्पासंभवाच्चेति । नैष दोषः । तेजःसर्ग
यके तृतीयत्वश्रवणात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः
शाद्वायुः । वायोरग्निः' (तै० २।१) इति । अशक्या हीयं
परिणेतुम् । शक्या तु परिणेतुं छान्दोग्यश्रुतिस्तदाकाशं
सृष्ट्वा 'तत्तेजोऽसृजत' इति । नहीयं श्रुतिस्तेजोजनिप्रधा
श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति । एक
स्य व्यापारद्वयासंभवात् । स्रष्टा त्वेकोऽपि क्रमेणानेकं
सृजेत् । इत्येकवाक्यत्वकल्पनायां संभवन्त्यां न विरुद्धार्थत्वेन
तव्या । नचास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसं
यते श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात् । यथा च 'सर्वं
ब्रह्म तज्जलान्' ( छा० ३।१४।१ ) इत्यत्र साक्षादेव सर्वस्य
जातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्र
क्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रु
नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति । ननु शमविधानार्थ
'तज्जलानिति शान्त उपासीत' इति श्रुतेः, नैतत्सृष्टिवाक्यं,

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

प्रदेशान्तरप्रसिद्धं क्रममुपरोद्धुमर्हतीति । 'तत्तेजोऽसृजत' इत्येतत्सृष्टिवाक्यम् । तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य इति । नेत्युच्यते । नहि तेजःप्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात्क्रमस्य । अपिच 'तत्तेजोऽसृजत' इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति । अर्थात्तु क्रमोऽवगम्यते । स च 'वायोरग्निः' इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते । विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयावसंभवानभ्युपगमाभ्यां निवारितौ । तस्मान्नास्ति श्रुत्योर्विप्रतिषेधः । अपिच छान्दोग्ये 'येनाश्रुतं श्रुतं भवति' इत्येतां प्रतिज्ञां वाक्योपक्रमे श्रुतां समर्थयितुमसमाम्नातमपि वियदुत्पत्तावुपसंख्यातव्यं, किमङ्ग पुनस्तैत्तिरीयके समाम्नातं नभो न संगृह्यते । यच्चोक्तमाकाशस्य सर्वेणानन्यदेशकालत्वाद्ब्रह्मणा तत्कार्यैश्च सह विदितमेव तद्भवत्यतो न प्रतिज्ञा हीयते, नच 'एकमेवाद्वितीयम्' इति श्रुतिकोपो भवति, क्षीरोदकवद्ब्रह्मनभसोरव्यतिरेकोपपत्तेरिति । अत्रोच्यते । न क्षीरोदकन्यायेनेदमेकविज्ञानेन सर्वविज्ञानं नेतव्यम् । मृदादिदृष्टान्तप्रणयनाद्धि प्रकृतिविकारन्यायेनैवेदं सर्वविज्ञानं नेतव्यमिति गम्यते । क्षीरोदकन्यायेन च सर्वविज्ञानं कल्प्यमानं न सम्यग्विज्ञानं स्यात् । नहि क्षीरज्ञानगृहीतस्योदकस्य सम्यग्विज्ञानगृहीतत्वमस्ति । नच वेदस्य पुरुषाणामिव मायालीकवञ्चनादिभिरर्थावधारणमुपपद्यते । सावधारणा चेयम् 'एकमेवाद्वितीयम्' इति श्रुतिः क्षीरोदकन्यायेन नीयमाना पीड्येत । नच स्वकार्यापेक्षयेदं वस्त्वेकदेशविषयं सर्वविज्ञानमेकमेवाद्वितीयतावधारणं चेति न्याय्यं, मृदादिष्वपि हि तत्संभवान्न तदपूर्ववदुपन्यसितव्यं भवति 'श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति' ( छा० ६।१।२ ) इत्यादिना । तस्मादशेषवस्तुविषयमेवेदं सर्वविज्ञानं सर्वस्य ब्रह्मकार्यतापेक्षयोपन्यस्यत इति द्रष्टव्यम् ॥ ६ ॥

यत्पुनरेतदुक्तमसंभवाद्गौणी गगनस्योत्पत्तिश्रुतिरिति । अत्र ब्रूमः—

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

तुशब्दोऽसंभवाशङ्काव्यावृत्त्यर्थः । न खल्वाकाशोत्पत्तावसंभवाशङ्का

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्तव्या । यतो यावत्किंचिद्विकारजातं दृश्यते घटघटिकोद कटककेयूरकुण्डलादि वा सूचीनाराचनिस्त्रिंशादि वा तावानेव लोके लक्ष्यते । नत्वविकृतं किंचित्कुतश्चिद्विभक्तमुपलभ्यते । श्चाकाशस्य पृथिव्यादिभ्योऽवगम्यते । तस्मात्सोऽपि विकारो भवितु एतेन दिक्कालमनःपरमाण्वादीनां कार्यत्वं व्याख्यातम् । नन्वात्मा शादिभ्यो विभक्त इति तस्यापि कार्यत्वं घटादिवत्प्राप्नोति । न । आकाशः संभूतः' (तै० २।१) इति श्रुतेः । यदि ह्यात्मापि विकार स्यात्परमन्यन्न श्रुतमित्याकाशादि सर्वं कार्यं निरात्मकमात्मनः स्यात् । तथाच शून्यवादः प्रसज्येत । आत्मत्वाच्चात्मनो निराक नुपपत्तिः । नह्यात्मागन्तुकः कस्यचित्, स्वयंसिद्धत्वात् । नह्या प्रमाणमपेक्ष्य सिध्यति । तस्य हि प्रत्यक्षादीनि प्रमाणान्यप्रसि सिद्धय उपादीयन्ते । नह्याकाशादयः पदार्थाः प्रमाणनिरपेक्षाः सिद्धाः केनचिदभ्युपगम्यन्ते । आत्मा तु प्रमाणादिव्यवहारा गेव प्रमाणादिव्यवहारात्सिध्यति । नचेदृशस्य निराकरणं आगन्तुकं हि वस्तु निराक्रियते न स्वरूपम् । य एव कर्ता तदेव तस्य स्वरूपम् । नह्यग्नेरौष्ण्यमग्निना निरा तथाहमेवेदानीं जानामि वर्तमानं वस्त्वहमेवातीतमतीततरं महमेवानागतमनागततरं च ज्ञास्यामीत्यतीतानागतवर्तमानभा थाभवत्यपि ज्ञातव्ये न ज्ञातुरन्यथाभावोऽस्ति, सर्वदा वर्तमान स्वात् । तथा भस्मीभवत्यपि देहे नात्मन उच्छेदो वर्तमान न्यथास्वभावत्वं वा न संभावयितुं शक्यम् । एवमप्रत्याख्येय देवाकार्यत्वमात्मनः कार्यत्वं चाकाशस्य । यत्तूक्तं समान कारणद्रव्यं व्योम्नो नास्तीति, तत्प्रत्युच्यते—न तावत्समान वारभते न भिन्नजातीयमिति नियमोऽस्ति । नहि तन्तूनां च समानजातीयत्वमस्ति, द्रव्यगुणत्वाभ्युपगमात् । न कारणानामपि तुरीवेमादीनां समानजातीयत्वनियमोऽस्ति । समवायिकारणविषय एव समानजातीयत्वाभ्युपगमो न

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

विषय इति । तदप्यनैकान्तिकम् । सूत्रगोवालैश्चानेकजातीयैरेका रज्जुः सृज्यमाना दृश्यते । तथा सूत्रैरूर्णादिभिश्च विचित्रान्कम्बलान्वितन्वते । सत्त्वद्रव्यत्वाद्यपेक्षया वा समानजातीयत्वे कल्प्यमाने नियमानर्थक्यं, सर्वस्य सर्वेण समानजातीयकत्वात् । नाप्यनेकमेवारभते नैकमिति नियमोऽस्ति । अणुमनसोराद्यकर्मारम्भाभ्युपगमात् । एकैको हि परमाणुर्मनश्चाद्यं कर्मारभते न द्रव्यान्तरैः[1] संहत्येत्यभ्युपगम्यते । द्रव्यारम्भ एवानेकारम्भकत्वनियम इति चेत् । न । परिणामाभ्युपगमात् । भवेदेष नियमो यदि संयोगसचिवं द्रव्यं द्रव्यान्तरस्यारम्भकमभ्युपगम्येत । तदेव तु द्रव्यं विशेषवदवस्थान्तरमापद्यमानं कार्यं नामाभ्युपगम्यते । तच्च क्वचिदनेकं परिणमते मृद्बीजाद्यङ्कुरादिभावेन । क्वचिदेकं परिणमते क्षीरादि दध्यादिभावेन । नेश्वरशासनमस्त्यनेकमेव कारणं कार्यं जनयतीति । अतः श्रुतिप्रामाण्यादेकस्माद्ब्रह्मण आकाशादिमहाभूतोत्पत्तिक्रमेण जगज्जातमिति निश्चीयते । तथाचोक्तम्—'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' ( ब्र० सू० २।१।२४ ) इति । यच्चोक्तमाकाशस्योत्पत्तौ न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यत इति । तदयुक्तम् । येनैव हि विशेषेण[2] पृथिव्यादिभ्यो व्यतिरिच्यमानं नभः स्वरूपवदिदानीमध्यवसीयते स एव विशेषः प्रागुत्पत्तेर्नासीदिति गम्यते । यथा च ब्रह्म न स्थूलादिभिः पृथिव्यादिस्वभावैः स्वभाववत्, 'अस्थूलमनणु' ( बृ० ३।८।८ ) इत्यादिश्रुतिभ्यः, एवमाकाशस्वभावेनापि न स्वभाववदनाकाशमिति श्रुतेरवगम्यते । तस्मात्प्रागुत्पत्तेरनाकाशमिति स्थितम् । यदप्युक्तं पृथिव्यादिवैधर्म्यादाकाशस्याजत्वमिति । तदप्यसत् । श्रुतिविरोधे सत्युत्पत्त्यसंभवानुमानस्याभासत्वोपपत्तेः । उत्पत्त्यनुमानस्य च दर्शितत्वात् । अनित्यमाकाशमनित्यगुणाश्रयत्वाद्घटादिवदित्यादिप्रयोगसंभवाच्च । आत्मन्यनैकान्तिकमिति चेत् । न । तस्यौपनिषदं प्रत्यनित्यगुणाश्रयत्वासिद्धेः । विभुत्वादीनां चाकाशस्योत्पत्तिवादिनं प्रत्यसिद्धत्वात् । यच्चोक्तमेतच्छब्दाच्चेति, तत्रामृतत्वश्रुतिस्तावद्वियत्यमृता दिवौकस इतिवद्द्रष्टव्या ।

---

१ द्रव्यान्तरैः समवायिभिः । २ शब्दाश्रयत्वं विशेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उत्पत्तिप्रलययोरुपपादितत्वात् । 'आकाशवत्सर्वगतश्च नित्यः'
प्रसिद्धमहत्त्वेनाकाशेनोपमानं क्रियते निरतिशयमहत्त्वाय ना
त्वाय । यथेषुरिव सविता धावतीति क्षिप्रगतित्वायोच्यते नेषुतु
त्वाय तद्वत् । एतेनानन्तत्वोपमानश्रुतिर्व्याख्याता । 'ज्यायान्
इत्यादिश्रुतिभ्यश्च ब्रह्मण आकाशस्योनपरिमाणत्वसिद्धिः । 'न
प्रतिमास्ति' ( श्वे० ४।१९ ) इति च ब्रह्मणोऽनुपमानत्वं द
'अतोऽन्यदार्तम्' ( बृ० ३।४।२ ) इति च ब्रह्मणोऽन्येषामाका
मार्तत्वं दर्शयति । तपसि ब्रह्मशब्दवदाकाशस्य जन्मश्रुतेर्गौ
तदाकाशसंभवश्रुत्यनुमानाभ्यां परिहृतम् । तस्माद्ब्रह्मकार्यं
सिद्धम् ॥ ७ ॥

## २ मातरिश्वाधिकरणम् । सू० ८

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥

अतिदेशोऽयम् । एतेन वियद्व्याख्यानेन मातरिश्वापि वियदा
र्व्याख्यातः । तत्राप्येते यथायोगं पक्षा रचयितव्याः । न वा
छान्दोगानामुत्पत्तिप्रकरणेऽनाम्नानादित्येकः पक्षः । अस्ति तु
याणामुत्पत्तिप्रकरण आम्नानम् 'आकाशाद्वायुः' ( तै० २।
पक्षान्तरम् । ततश्च श्रुत्योर्विप्रतिषेधे सति गौणी वायोरुत्पत्ति
वादित्यपरोऽभिप्रायः । असंभवश्च 'सैषाऽनस्तमिता देवता
( बृ० १।५।२२ ) इत्यस्तमयप्रतिषेधात्, अमृतत्वादिश्रवणा
ज्ञानुपरोधाद्यावद्विकारं च विभागाभ्युपगमादुत्पद्यते वायुरिति सि
अस्तमयप्रतिषेधोऽपरविद्याविषय आपेक्षिकः । अग्न्यादीनामि
रस्तमयाभावात् । कृतप्रतिविधानं चामृतत्वादिश्रवणम् । ननु वा
काशस्य च तुल्ययोरुत्पत्तिप्रकरणे श्रवणाश्रवणयोरेकमेवाधिक
विषयमस्तु किमतिदेशेनासति विशेष इति । उच्यते—सत्य
तथापि मन्दधियां शब्दमात्रकृताशङ्कानिवृत्त्यर्थोऽयमतिदेशः
संवर्गविद्यादिषु ह्युपास्यतया वायोर्महाभागत्वश्रवणात्, अस्तम
दिभ्यश्च भवति नित्यत्वाशङ्का कस्यचिदिति ॥ ८ ॥

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

## ३ असंभवाधिकरणम् । सू० ९

### असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥

वियत्पवनयोरसंभाव्यमानजन्मनोरप्युत्पत्तिमुपश्रुत्य ब्रह्मणोऽपि भवेत्कुतश्चिदुत्पत्तिरिति स्यात्कस्यचिन्मतिः । तथा विकारेभ्य एवाकाशादिभ्य उत्तरेषां विकाराणामुत्पत्तिमुपश्रुत्याकाशस्यापि विकारादेव ब्रह्मण उत्पत्तिरिति कश्चिन्मन्येत । तामाशङ्कामपनेतुमिदं सूत्रम्—'असंभवस्तु' इति । न खलु ब्रह्मणः सदात्मकस्य कुतश्चिदन्यतः संभव उत्पत्तिराशङ्कितव्या । कस्मात् । अनुपपत्तेः । सन्मात्रं हि ब्रह्म । न तस्य सन्मात्रादेवोत्पत्तिः संभवति, असत्यतिशये प्रकृतिविकारभावानुपपत्तेः । नापि सद्विशेषाद्दृष्टविपर्ययात् । सामान्याद्धि विशेषा उत्पद्यमाना दृश्यन्ते मृदादेर्घटादयो नतु विशेषेभ्यः सामान्यम् । नाप्यसतो निरात्मकत्वात् । 'कथमसतः सज्जायेत' ( छा० ८।७।१ ) इति चाक्षेपश्रवणात् । 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' ( श्वे० ६।९ ) इति च ब्रह्मणो जनयितारं वारयति । वियत्पवनयोः पुनरुत्पत्तिः प्रदर्शिता नतु ब्रह्मणः सास्तीति वैषम्यम् । नच विकारेभ्यो विकारान्तरोत्पत्तिदर्शनाद्ब्रह्मणोऽपि विकारत्वं भवितुमर्हतीति मूलप्रकृत्यनभ्युपगमेऽनवस्थाप्रसङ्गात् । या मूलप्रकृतिरभ्युपगम्यते तदेव च नो ब्रह्मेत्यविरोधः ॥ ९ ॥

## ४ तेजोऽधिकरणम् । सू० १०

### तेजोऽतस्तथा ह्याह ॥ १० ॥

छान्दोग्ये सन्मूलत्वं तेजसः श्रावितं, तैत्तिरीयके तु वायुमूलत्वं, तत्र तेजोयोनिं प्रति श्रुतिविप्रतिपत्तौ सत्यां प्राप्तं तावद्ब्रह्मयोनिकं तेज इति । कुतः । 'सदेव' इत्युपक्रम्य 'तत्तेजोऽसृजत' इत्युपदेशात् । सर्वविज्ञानप्रतिज्ञायाश्च ब्रह्मप्रभवत्वे सर्वस्य संभवात् । 'तज्जलान्' ( छा० ८।७।१ ) इति चाविशेषश्रुतेः 'एतस्माज्जायते प्राणः' ( मुण्ड० २।१।३ ) इति चोपक्रम्य श्रुत्यन्तरे सर्वस्याविशेषेण ब्रह्मजत्वोपदेशात् । तैत्तिरीयके च 'स तपस्तप्त्वा । इदं सर्वमसृजत । यदिदं किंच' ( तै० ३।६।१ ) इत्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषश्रवणात् । तस्मात् 'वायोरग्निः' इति क्रमोपदेशो द्रष्ट
रनन्तरमग्निः संभूत इति । एवं प्राप्त उच्यते—तेजोऽतो वा
जायत इति । कस्मात् । तथाह्याह—'वायोरग्निः' इति । अन्य
तेजसो ब्रह्मजत्वे सत्यसति वायुजत्वे वायोरग्निरितीयं श्रुतिः
स्यात् । ननु क्रमार्थैषा भविष्यतीत्युक्तम् । नेति ब्रूमः—'तस्मा
स्मादात्मन आकाशः संभूतः' ( तै० २।१।१ ) इति पुरस्तात्सं
दानस्यात्मनः पञ्चमीनिर्देशात्, तस्यैव च संभवतेरिहाधिकारात्,
दपि च तदधिकारे 'पृथिव्या ओषधयः' ( तै० २।१।१ ) इत्य
ञ्चमीदर्शनाद्वायोरग्निरित्यपादानपञ्चम्येवैषेति गम्यते । अपि च
रूर्ध्वमग्निः संभूत इति कल्प्य उपपदार्थयोगः क्लृप्तस्तु कारक
वायोरग्निः संभूत इति । तस्मादेषा श्रुतिर्वायुयोनित्वं तेजसोऽव
नन्वितरापि श्रुतिर्ब्रह्मयोनित्वं तेजसोऽवगमयति 'तत्तेजोऽसृजत'
न । तस्याः पारम्पर्यजत्वेऽप्यविरोधात् । यदापि ह्याकाशं वायुं च
वायुभावापन्नं ब्रह्म तेजोऽसृजतेति कल्प्यते, तदापि ब्रह्मजत्वं ते
विरुध्यते । यथा तस्याः शृतं तस्या दधि तस्या आमिक्षेत्यादि ।
च ब्रह्मणो विकारात्मनावस्थानं 'तदात्मानं स्वयमकुरुत' ( तै० २
इति । तथाचेश्वरस्मरणं भवति—'बुद्धिर्ज्ञानमसंमोहः' ( भ०
१०।४ ) इत्याद्यनुक्रम्य 'भवन्ति भावा भूतानां मत्त एव पृ
( भ० गी० १०।५ ) इति । यद्यपि बुद्ध्यादयः स्वकारणेभ्यः
भवन्तो दृश्यन्ते तथापि सर्वस्य भावजातस्य साक्षात्प्रणाड्या वे
त्वात् । एतेनाक्रमवत्सृष्टिवादिन्यः श्रुतयो व्याख्याताः । तासां
पपत्तेः । क्रमवत्सृष्टिवादिनीनां त्वन्यथानुपपत्तेः । प्रतिज्ञापि स
मात्रमपेक्षते नाव्यवहितजन्यत्वमित्यविरोधः ॥ १० ॥

१ कदर्थिता पीडिता बाधितेति यावत् । २ तदधिकारे संभूत्यधिकारे । ३
धेनोः शृतं तप्तं क्षीरं साक्षात्कार्यं, दध्यादिकं तु पारम्पर्यजमित्यर्थः ।
कठिनक्षीरमामिक्षा । ४ प्रणाड्या परम्परया ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

## ५ अबधिकरणम् । सू०—११

### आपः ॥ ११ ॥

'अतस्तथा ह्याह' इत्यनुवर्तते । आपोऽतस्तेजसो जायन्ते । कस्मात् । तथा ह्याह—'तदपोऽसृजत' इति 'अग्नेरापः' इति च सति वचने नास्ति संशयः । तेजसस्तु सृष्टिं व्याख्याय पृथिव्या व्याख्यास्यन्नपोऽन्तरियामित्याप इति सूत्रयांबभूव ॥ ११ ॥

## ६ पृथिव्यधिकाराधिकरणम् । सू० १२

### पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त' ( छा० ६।२।४ ) इति श्रूयते । तत्र संशयः—किमनेनान्नशब्देन व्रीहियवाद्यभ्यवहार्यं चौदनाद्युच्यते किं वा पृथिवीति । तत्र प्राप्तं तावद्व्रीहियवाद्योदनादि वा परिग्रहीतव्यमिति । तत्र ह्यन्नशब्दः प्रसिद्धो लोके वाक्यशेषोऽप्येतमर्थमुपोद्बलयति । 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवती'ति । व्रीहियवाद्येव हि सति वर्षणे बहु भवति न पृथिवीति । एवं प्राप्ते ब्रूमः—पृथिव्येवेयमन्नशब्देनाद्भ्यो जायमाना विवक्ष्यत इति । कस्मात् । अधिकाराद्रूपाच्छब्दान्तराच्च । अधिकारस्तावत् 'तत्तेजोऽसृजत' 'तदपोऽसृजत' इति महाभूतविषयो वर्तते । तत्र क्रमप्राप्तां पृथिवीं महाभूतं विलङ्घ्य नाकस्माद्व्रीह्यादिपरिग्रहो न्याय्यः । तथा रूपमपि वाक्यशेषे पृथिव्यनुगुणं दृश्यते 'यत्कृष्णं तदन्नस्य' इति । नह्योदनादेरभ्यवहार्यस्य कृष्णत्वनियमोऽस्ति । नापि व्रीह्यादीनाम् । ननु पृथिव्या अपि नैव कृष्णत्वनियमोऽस्ति पयःपाण्डुरस्याङ्गाररोहितस्य च क्षेत्रस्य दर्शनात् । नायं दोषः । बाहुल्यापेक्षत्वात् । भूयिष्ठं हि पृथिव्याः कृष्णं रूपं न तथा श्वेतरोहिते । पौराणिका अपि पृथिवीच्छायां शर्वरीमुपदिशन्ति । सा च कृष्णाभासेत्यतः कृष्णं रूपं पृथिव्या इति श्लिष्यते ।

---

१ अन्नशब्दोऽयं व्युत्पत्त्या प्रसिद्ध्या च व्रीहियवादौ तद्विकारे चौदने प्रवर्तते । २ अभ्यवहार्यं भक्ष्यम् । ३ अधिकारः प्रकरणम्, रूपं लिङ्गम् । ४ पयोवत्पाण्डुरस्य, अङ्गारवद्रोहितस्य रक्तस्य ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रुत्यन्तरमपि समानाधिकारमद्भ्यः पृथिवीति भवति । 'यद्
आसीत्तत्समहन्यत सा पृथिव्यभवत्' ( बृ० १।२।२ )
पृथिव्यास्तु व्रीह्यादेरुत्पत्तिं दर्शयति—'पृथिव्या ओषधयः ओ
ऽन्नम्' इति च । एवमधिकारादिषु पृथिव्याः प्रतिपादकेषु
व्रीह्यादिप्रतिपत्तिः । प्रसिद्धिरप्यधिकारादिभिरेव बाध्यते । वा
पार्थिवत्वादन्नाद्यस्य तद्द्वारेण पृथिव्या एवाद्भ्यः प्रभवत्वं
द्रष्टव्यम् । तस्मात्पृथिवीयमन्नशब्देति ॥ १२ ॥

## ७ तदभिध्यानाधिकरणम् । सू० १३

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥

किमिमानि वियदादीनि भूतानि स्वयमेव स्वविकारान्
स्थितपरमेश्वर एव तेन तेनात्मनावतिष्ठमानोऽभिध्यायंस्तं
सृजतीति संदेहे सति प्राप्तं तावत्स्वयमेव सृजन्तीति । कुतः
शाद्वायुर्वायोरग्निः' इत्यादिस्वातन्त्र्यश्रवणात् । नन्वचेतनानां
प्रवृत्तिः प्रतिषिद्धा । नैष दोषः । 'तत्तेज ऐक्षत ता आप
( छा० ६।२।४ ) इति च भूतानामपि चेतनत्वश्रवणादिति ।
ऽभिधीयते—स एव परमेश्वरस्तेन तेनात्मनावतिष्ठमानोऽभि
विकारं सृजतीति । कुतः । तल्लिङ्गात् । तथाहि शास्त्रम्—'यः
तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी
पृथिवीमन्तरो यमयति' ( बृ० ३।७।३ ) इत्येवंजातीयकं सा
भूतानां प्रवृत्तिं दर्शयति । तथा 'सोऽकामयत बहु स्यां प्र
प्रस्तुत्य 'सच्च त्यच्चाभवत् । तदात्मानं स्वयमकुरुत' ( तै० २।६
च तस्यैव च सर्वात्मभावं दर्शयति । यत्त्वीक्षणश्रवणमप्तेजसो
श्वरावेशवशादेव द्रष्टव्यम् 'नान्योऽतोऽस्ति द्रष्टा' ( बृ० ३
इतीक्षित्रन्तरप्रतिषेधात्, प्रकृतत्वाच्च सत ईक्षितुः 'तदैक्षत
प्रजायेय' इत्यत्र ॥ १३ ॥

---

१ तत्तत्र सृष्टिकाले यदपां शरः मण्डवद्घनीभाव आसीत्स एव समहन्यत
तोऽभूत् । २ परमेश्वरस्यान्तर्यामिभावेनावेशः संबन्धस्तद्वशाद्भूतेष्वीक्षणं
तेषां चेतनत्वं स्वातन्त्र्यं वेत्यर्थः ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

## ८ विपर्ययाधिकरणम् । सू० १४

### विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥

भूतानामुत्पत्तिक्रमश्चिन्तितः । अथेदानीमप्ययक्रमश्चिन्त्यते । किमनियतेन क्रमेणाप्यय उतोत्पत्तिक्रमेणाथवा तद्विपरीतेनेति । त्रयोऽपि चोत्पत्तिस्थितिप्रलया भूतानां ब्रह्मायत्ताः श्रूयन्ते—'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति' (तै० ३।१।१) इति । तत्रानियमोऽविशेषादिति प्राप्तम् । अथवोत्पत्तेः क्रमस्य श्रुतत्वात्प्रलयस्यापि क्रमाकाङ्क्षिणः स एव क्रमः स्यादिति । एवं प्राप्तं ततो ब्रूमः—विपर्ययेण तु प्रलयक्रमोऽत उत्पत्तिक्रमाद्भवितुमर्हति । तथाहि लोके दृश्यते येन क्रमेण[1] सोपानमारूढस्ततो विपरीतेन क्रमेणावरोहतीति । अपिच दृश्यते मृदो जातं घटशरावाद्यप्ययकाले मृद्भावमप्येत्यद्भ्यश्च जातं हिमकरकाद्यब्भावमप्येतीति । अतश्चोपपद्यत एतत् । यत्पृथिव्यद्भ्यो जाता सती स्थितिकालव्यतिक्रान्तावपोऽपीयादापश्च तेजसो जाताः सत्यस्तेजोऽपीयुः । एवं क्रमेण सूक्ष्मं सूक्ष्मतरं चानन्तरमनन्तरं कारणमपीत्य सर्वं कार्यजातं परमकारणं परमसूक्ष्मं च ब्रह्माप्येतीति वेदितव्यम् । नहि स्वकारणव्यतिक्रमेण कारणकारणे कार्याप्ययो न्याय्यः । स्मृतावप्युत्पत्तिक्रमविपर्ययेणैवाप्ययक्रमस्तत्र तत्र दर्शितः—'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते । ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते' इत्येवमादौ । उत्पत्तिक्रमस्तूत्पत्तावेव श्रुतत्वान्नाप्यये भवितुमर्हति । नचासावयोग्यत्वादप्ययेनाकाङ्क्ष्यते । नहि कार्ये ध्रियमाणे कारणस्याप्ययो युक्तः कारणाप्यये कार्यस्यावस्थानानुपपत्तेः । कार्याप्यये तु कारणस्यावस्थानं युक्तं मृदादिष्वेवं दृष्टत्वात् ॥ १४ ॥

## ९ अन्तराविज्ञानाधिकरणम् । सू० १५

### अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

भूतानामुत्पत्तिप्रलयावनुलोमप्रतिलोमक्रमाभ्यां भवत इत्युक्तम् ।

---

[1] क्रमेण परम्परया ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आत्मादिरुत्पत्तिः प्रलयश्चात्मान्त इत्यप्युक्तम् । सेन्द्रियस्य बुद्धेश्च सद्भावः प्रसिद्धः श्रुतिस्मृत्योः । 'बुद्धिं तु सारथिं विद्धि प्रग्रहमेव च । इन्द्रियाणि हयानाहुः' ( कठ० ३।३ ) इत्यादि तयोरपि कस्मिंश्चिदन्तराले क्रमेणोत्पत्तिप्रलयावुपसंग्राह्यौ, सर्वस्य जातस्य ब्रह्मजत्वाभ्युपगमात् । अपिचाथर्वण उत्पत्तिप्रकरणे मात्मनश्चान्तराले करणान्यनुक्रम्यन्ते । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' ( मुण्ड० २।१।३ ) इति । तस्मात्पूर्वोक्तोत्पत्तिप्रलयक्रमभङ्गप्रसङ्गो भूता-नामिति चेत् । न । अविशेषात् । यदि तावद्भौतिकानि करणानि ततो भूतो-त्पत्तिप्रलयाभ्यामेवैषामुत्पत्तिप्रलयौ भवत इति नैतयोः क्रमान्तरं मृग्यम् । भवति च भौतिकत्वे लिङ्गं करणानाम् । 'अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' ( छा० ६।५।४ ) इत्येवंजातीयकम् । व्यपदेशोऽपि क्वचिद्भूतानां करणानां च ब्राह्मणपरिव्राजकन्यायेन नेतव्यः । अथ त्वभौतिकानि करणानि तथापि भूतोत्पत्तिक्रमो न करणैर्विशेष्यते, प्रथमं करणान्युत्पद्यन्ते चरमं भूतानि प्रथमं वा भूतान्युत्पद्यन्ते चरमं वा करणानीति । आथर्वणे तु समाम्नायक्रममात्रं करणानां भूतानां च, न तत्रोत्पत्तिक्रम उच्यते । तथान्यत्रापि पृथगेव भूतक्रमात्करणक्रम आम्नायते—'प्रजापतिर्वा इदमग्र आसीत्स आत्मानमैक्षत स मनो-ऽसृजत तन्मन एवासीत्तदात्मानमैक्षत तद्वाचमसृजत' इत्यादिना । तस्मान्नास्ति भूतोत्पत्तिक्रमस्य भङ्गः ॥ १५ ॥

१० चराचरव्यपाश्रयाधिकरणम् । सू० १६

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ १६ ॥**

स्तो जीवस्याप्युत्पत्तिप्रलयौ, जातो देवदत्तो मृतो देवदत्त इत्येवं...

१ अन्यपराः शब्दा लिङ्गानीत्युच्यन्ते । २ इदं स्थूलमुत्पत्तेः प्राक् प्रजापतिरेव आसीत् ।

C-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

यच्चाल्लौकिकव्यपदेशात् जातकर्मादिसंस्कारविधानाच्चेति स्यात्कस्यचिद्भ्रान्तिस्तामपनुदामः । न जीवस्योत्पत्तिप्रलयौ स्तः, शास्त्रफलसंबन्धोपपत्तेः । शरीरानुविनाशिनि हि जीवे शरीरान्तरगतेष्टानिष्टप्राप्तिपरिहारार्थौ विधिप्रतिषेधावनर्थकौ स्याताम् । श्रूयते च—'जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते' ( छा० ६।११।३ ) इति । ननु लौकिको जन्ममरणव्यपदेशो जीवस्य दर्शितः । सत्यं दर्शितः । भाक्तस्त्वेष जीवस्य जन्ममरणव्यपदेशः । किमाश्रयः पुनरयं मुख्यो यदपेक्षया भाक्त इति । उच्यते—चराचरव्यपाश्रयः । स्थावरजङ्गमशरीरविषयौ जन्ममरणशब्दौ । स्थावरजङ्गमानि हि भूतानि जायन्ते च म्रियन्ते चातस्तद्विषयौ जन्ममरणशब्दौ मुख्यौ सन्तौ तत्स्थे जीवात्मन्युपचर्येते, तद्भावभावित्वात् । शरीरप्रादुर्भावतिरोभावयोर्हि सतोर्जन्ममरणशब्दौ भवतो नासतोः । नहि शरीरसंबन्धादन्यत्र जीवो जातो मृतो वा केनचिल्लक्ष्यते । 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः स उत्क्रामन् म्रियमाणः' ( बृ० ४।३।८ ) इति च शरीरसंयोगवियोगनिमित्तावेव जन्ममरणशब्दौ दर्शयति । जातकर्मादिविधानमपि देहप्रादुर्भावापेक्षमेव द्रष्टव्यम् । अभावाज्जीवप्रादुर्भावस्य । जीवस्य परस्मादात्मन उत्पत्तिर्वियदादीनामिवास्ति नास्ति वेत्येतदुत्तरेण सूत्रेण वक्ष्यति । देहाश्रयौ तावज्जीवस्य स्थूलावुत्पत्तिप्रलयौ न स्त इत्येतदनेन सूत्रेणावोचत् ॥ १६ ॥

## ११ आत्माधिकरणम् । सू० १७

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

अस्त्यात्मा जीवाख्यः शरीरेन्द्रियपञ्जराध्यक्षः कर्मफलसंबन्धी । स किं व्योमादिवदुत्पद्यते ब्रह्मण आहोस्विद्ब्रह्मवदेव नोत्पद्यत इति श्रुतिविप्रतिपत्तेर्विषयः । कासुचिच्छ्रुतिष्वग्निविस्फुलिङ्गादिनिदर्शनैर्जीवात्मनः परस्माद्ब्रह्मण उत्पत्तिराम्नायते, कासुचित्त्वविकृतस्यैव परस्य ब्रह्मणः कार्यप्रवेशेन जीवभावो विज्ञायते नचोत्पत्तिराम्नायत इति । तत्र प्राप्तं ताव-

---

[1] जीवापेतं जीवेन त्यक्तमिदं शरीरम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुत्पद्यते जीव इति । कुतः । प्रतिज्ञानुपरोधादेव[1] । 'एकवि (बृ
सर्वमिदं विदितम्' इतीयं प्रतिज्ञा सर्वस्य वस्तुजातस्य ब्रह्मप्रभवत्वे 'अ
नोपरुध्येत । तत्त्वान्तरत्वे तु जीवस्य प्रतिज्ञेयमुपरुध्येत । न तु
परमात्मैव जीव इति शक्यते विज्ञातुं, लक्षणभेदात् । अपहत व्या
दिधर्मको हि परमात्मा, तद्विपरीतो हि जीवः । विभागाच्चास्य (बृ
त्वसिद्धिः । यावान्ह्याकाशादिः प्रविभक्तः स सर्वो विकारस्त १।४
शादेरुत्पत्तिः समधिगता । जीवात्मापि पुण्यापुण्यकर्मा सुखदुःखयु
तिशरीरं प्रविभक्त इति तस्यापि प्रपञ्चोत्पत्त्यवसर उत्पत्तिर्भवितु
अपिच 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः
प्राणाः' ( बृ० २।१।२० ) इति प्राणादेर्भोग्यजातस्य सृष्टिं
एव आत्मानो व्युच्चरन्ति' इति भोक्तृणामात्मनां पृथक्सृष्टिं
'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः[2] ।
राद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति'
२।१।१ ) इति च जीवात्मनामुत्पत्तिप्रलयावुच्येते ।
जीवात्मानो हि परमात्मना सरूपा भवन्ति चैतन्ययोगात्
क्वचिदश्रवणमन्यत्र श्रुतं वारयितुमर्हति । श्रुत्यन्तरगत
स्याधिकस्यार्थस्य सर्वत्रोपसंहर्तव्यत्वात् । प्रवेशश्रुतिरप्येवं
भावापत्त्यैव व्याख्यातव्या, 'तदात्मानं स्वयमकुरुत' इत्यादिवत्
दुत्पद्यते जीव इति । एवं प्राप्ते ब्रूमः—नात्मा जीव उत्पद्यत
कस्मात् । अश्रुतेः । नह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति भूयःसु
ननु क्वचिदश्रवणमन्यत्र श्रुतं न वारयतीत्युक्तम् । सत्यमुक्तम्
रेव त्वस्य न संभवतीति वदामः । कस्मात् । नित्यत्वाच्च
च्वादादजत्वादिभ्यश्च । नित्यत्वं ह्यस्य श्रुतिभ्योऽवगम्यते
रित्वमविकृतस्यैव ब्रह्मणो जीवात्मनावस्थानं ब्रह्मात्मना
रूपस्योत्पत्तिरुपपद्यते । ताः काः श्रुतयः । 'न जीवो म्रियते'
६।११।३ ), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतो

---

१ उपरोधो बाधः । २ सरूपशब्दो जीववाचीति शेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(बृ० ४।४।२२), 'न जायते म्रियते वा विपश्चित्' (कठ० २।१८), 'अजो नित्यः शाश्वतोऽयं पुराणः' (कठ० २।१८), 'तत्सृष्ट्वा तदेवानुप्राविशत्' (तै० २।६।१), 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' (छा० ६।३।२), 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' (बृ० १।४।७), 'तत्त्वमसि' (छा० ६।८।७), 'अहं ब्रह्मास्मि' (बृ० १।४।१०), 'अयमात्मा ब्रह्म सर्वानुभूः' (बृ० २।५।१९) इत्येवमाद्या नित्यत्ववादिन्यः सत्यो जीवस्योत्पत्तिं प्रतिबध्नन्ति । ननु प्रविभक्तत्वाद्विकारो विकारत्वाच्चोत्पद्यत इत्युक्तम् । अत्रोच्यते—नास्य प्रविभागः स्वतोऽस्ति । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' (श्वे० ६।११) इति श्रुतेः । बुद्ध्याद्युपाधिनिमित्तं त्वस्य प्रविभागप्रतिभानमाकाशस्येव घटादिसंबन्धनिमित्तम् । तथाच शास्त्रम्—'स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' (बृ० ४।४।५) इत्येवमादि ब्रह्मण एवाविकृतस्य सतोऽप्येकस्यानेकबुद्ध्यादिमयत्वं दर्शयति । तन्मयत्वं चास्य विविक्तस्वरूपानभिव्यक्त्या तदुपरक्तस्वरूपत्वं स्त्रीमयो जाल्म[1] इत्यादिवद्द्रष्टव्यम् । यदपि क्वचिदस्योत्पत्तिप्रलयश्रवणं तदप्यत एवोपाधिसंबन्धान्नेतव्यम् । उपाध्युत्पत्त्यास्योत्पत्तिरुपाधिप्रलयेन च प्रलय इति । तथाच दर्शयति—'प्रज्ञानघन एवैतेभ्यो[2] भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्ति' (बृ० ४।५।१३) इति । तथोपाधिप्रलय एवायं नात्मविलय इत्येतदप्यत्रैव 'मा भगवान्मोहान्तमापीपदन्न वा अहमिमं विजानामि न प्रेत्य संज्ञास्ति' इति प्रश्नपूर्वकं प्रतिपादयति—'न वा अरेऽहं मोहं[3] ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्राऽसंसर्गस्त्वस्य भवति' (बृ० ४।५।१४) इति । प्रतिज्ञानुपरोधोऽप्यविकृतस्यैव ब्रह्मणो जीवभावाभ्युपगमात् । लक्षणभेदोऽप्यनयोरुपाधिनिमित्त एव । 'अत

१ जाल्मः कामजडः । स यथा स्त्रीपरतन्त्रः स्त्रीमयो व्यपदिश्यते । २ एतेभ्यो देहात्मना परिणतेभ्यो भूतेभ्यः साम्येनोत्थाय जनित्वा तान्येव लीयमानान्यनु पश्चाद्विनश्यति । ३ मोहं मोहकरं वाक्यम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऊर्ध्वं विमोक्षायैव ब्रूहि' (बृ० ४।३।१५) इति च प्रकृतस्यैव ...मयस्यात्मनः सर्वसंसारधर्मप्रत्याख्यानेन परमात्मभावप्रतिपाद... तस्मान्नैवात्मोत्पद्यते प्रविलीयते चेति ॥ १७ ॥

## १२ ज्ञाधिकरणम् । सू० १८

### ज्ञोऽत एव ॥ १८ ॥

स किं कणभुजानामिवागन्तुकचैतन्यः स्वतोऽचेतन आहो... ख्यानामिव नित्यचैतन्यस्वरूप एवेति वादिविप्रतिपत्तेः संशयः। ... स्यात्तम् । आगन्तुकमात्मनश्चैतन्यमात्ममनःसंयोगजमग्निघटसं... हितादिगुणवदिति प्राप्तम् । नित्यचैतन्यत्वे हि सुप्तमूर्च्छितग्रहावि... चैतन्यं स्यात् । ते पृष्टाः सन्तो न किंचिद्वयमचेतयामहीति ... स्वस्थाश्च चेतयमाना दृश्यन्ते । अतः कादाचित्कचैतन्यत्वादा... तन्य आत्मेति । एवं प्राप्तेऽभिधीयते—ज्ञो नित्यचैतन्योऽयमात्मा... यस्मादेव नोत्पद्यते परमेव ब्रह्माविकृतमुपाधिसंपर्काज्जीवभावेना... परस्य हि ब्रह्मणश्चैतन्यस्वरूपत्वमाम्नातम्—'विज्ञानमानन्दं ब्रह्म' (बृ० ३।९।२८), 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१।१), 'अनन्तरो... कृत्स्नः प्रज्ञानघन एव' (बृ० ४।५।१३), इत्यादिषु श्रुतिषु ... चेत्परं ब्रह्म जीवस्तस्माज्जीवस्यापि नित्यचैतन्यस्वरूपत्वमग्न्यौ... वदिति गम्यते । विज्ञानमयप्रक्रियायां च श्रुतयो भवन्ति—'... सुप्तानभिचाकशीति' (बृ० ४।३।११) 'अत्रायं पुरुषः स्वयंज्योतिः' (बृ० ४।३।९) इति, 'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ० ४।३।३०) इत्येवंरूपाः । 'अथ यो वेदेदं जिघ्राणीति स आत्मा' (छा० ८।१२।४) इति च सर्वैः करणद्वारैरिदं वेदेदं वेदेति विज्ञानेन... नात्तद्रूपत्वसिद्धिः । नित्यस्वरूपचैतन्यत्वे घ्राणाद्यानर्थक्यमिति चे... गन्धादिविषयविशेषपरिच्छेदार्थत्वात् । तथाहि दर्शयति—'गन्धाय घ्राणम्' इत्यादि । यत्तु सुप्तादयो न चेतयन्त इति तस्य श्रुत्यैव ...

१ स्वयमसुप्तो भासमान एवात्मा सुप्तान्वागादीनुपरतव्यापारानभिचाकशीति पश्यति । २ परिच्छेदो वृत्तिः । ३ गन्धाय तद्गोचरान्तःकरणवृत्तये ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिहितः । सुषुप्तं प्रकृत्य 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति—नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (बृ० ४।३।२३) इत्यादिना । एतदुक्तं भवति—विषयाभावादियमचेतयमानता न चैतन्याभावादिति । यथा वियदाश्रयस्य प्रकाशस्य प्रकाश्याभावादनभिव्यक्तिर्न स्वरूपभावात्तद्वत् । वैशेषिकादितर्कश्च श्रुतिविरोध आभासीभवति । तस्मान्नित्यचैतन्यस्वरूप एवात्मेति निश्चिनुमः ॥ १८ ॥

## १३ उत्क्रान्तिगत्यधिकरणम् । सू० १९–३२

### उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥

इदानीं तु किंपरिमाणो जीव इति चिन्त्यते । किमणुपरिमाण उत मध्यमपरिमाण आहोस्विन्महापरिमाण इति । ननु च नात्मोत्पद्यते नित्यचैतन्यश्चायमित्युक्तम् । अतश्च पर एवात्मा जीव इत्यापतति, परस्य चात्मनोऽनन्तत्वमाम्नातं, तत्र कुतो जीवस्य परिमाणचिन्तावतार इति । उच्यते—सत्यमेतत् । उत्क्रान्तिगत्यागतिश्रवणानि तु जीवस्य परिच्छेदं प्रापयन्ति । स्वशब्देन चास्य क्वचिदणुपरिमाणत्वमाम्नायते । तस्य सर्वस्यानाकुलत्वोपपादनायायमारम्भः । तत्र प्राप्तं तावदुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नोऽणुपरिमाणो जीव इति । उत्क्रान्तिस्तावत्—'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति' (कौषीत० ३।३) इति । गतिरपि 'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति (कौषीत० १।२) इति । आगतिरपि 'तस्माल्लोकात्पुनरैत्यस्मै लोकाय कर्मणे' (बृ० ४।४।६) इति । आसामुत्क्रान्तिगत्यागतीनां श्रवणात्परिच्छिन्नस्तावज्जीव इति प्राप्नोति । नहि विभोश्चलनमवकल्पत इति । सति च परिच्छेदे शरीरपरिमाणत्वस्यार्हतपरीक्षायां निरस्तत्वादणुरात्मेति गम्यते ॥ १९ ॥

### स्वात्मना चोत्तरयोः ॥ २० ॥

उत्क्रान्तिः कदाचिदचलतोऽपि ग्रामस्वाम्यनिवृत्तिवद्देहस्वाम्यनिवृत्त्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्मक्षयेणावकल्पेत । उत्तरे तु गत्यागती नाचलतः संभवतः । न
हि तयोः संबन्धो भवति, गमेः कर्तृस्थक्रियात्वात् । अमध्यमपरि-
च गत्यागती अणुत्व एव संभवतः । सत्योश्च गत्यागत्योरुत्क्रान्ति-
सृप्तिरेव देहादिति प्रतीयते । नह्यनपसृप्तस्य देहाद्गत्यागती स्या-
देहप्रदेशानां चोत्क्रान्तावपादानत्ववचनात्[1] । 'चक्षुषो वा मूर्ध्नो वा
वा शरीरदेशेभ्यः' ( बृ० ४।४।२ ) इति । 'स एतास्तेजोमात्राः
भ्याददानो हृदयमेवान्ववक्रामति' ( बृ० ४।४।१ ), 'शुक्रमादा-
रेति स्थानम्' ( बृ० ४।३।११ ) इति चान्तरेऽपि शरीरे शारीरस्य
गती भवतः । तस्मादप्यस्याणुत्वसिद्धिः ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

अथापि स्यान्नाणुरयमात्मा । कस्मात् । अतच्छ्रुतेः । अणुत्व-
परिमाणश्रवणादित्यर्थः । 'स वा एष महानज आत्मा योऽयं वि-
प्राणेषु' ( बृ० ४।४।१२ ), आकाशवत्सर्वगश्च नित्यः', 'स-
मनन्तं ब्रह्म' ( तै० २।१।१ ) इत्येवंजातीयका हि श्रुतिरणु-
विप्रतिषिध्येतेति चेत् । नैष दोषः । कस्मात् । इतराधिकारात्[2] ।
ह्यात्मनः प्रक्रियायामेषा परिमाणान्तरश्रुतिः । परस्यैवात्मनः
वेदान्तेषु वेदितव्यत्वेन प्रकृतत्वात् । विरजः पर आकाशादित्ये-
परस्यैवात्मनस्तत्र तत्र विशेषाधिकारात् । ननु 'योऽयं विज्ञानमयः प्रा-
णेषु' ( बृ० ४।४।२२ ) इति शारीर एव महत्त्वसंबन्धित्वेन
श्यते । शास्त्रदृष्ट्या त्वेष निर्देशो वामदेववद्द्रष्टव्यः । तस्मात्प्राज्ञवि-
त्परिमाणान्तरश्रवणस्य न जीवस्याणुत्वं विरुध्यते ॥ २१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

इतश्चाणुरात्मा यतः साक्षादेवास्याणुत्ववाची शब्दः श्रूयते—'
णुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश' (
३।१।९ ) इति । प्राणसंबन्धाच्च जीव एवायमणुरभिहित इति

१ अपादानत्वमवधित्वम् । २ इतराधिकारात् ब्रह्मप्रकरणात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

तथोन्मानमपि जीवस्याणिमानं गमयति—'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः' (श्वे० ५।८) इति । 'आराग्रमात्रो ह्यवरोऽपि दृष्टः' (श्वे. ५।८) इति चोन्मानान्तरम् ॥ २२ ॥

नन्वणुत्वे सत्येकदेशस्थस्य सकलदेहगतोपलब्धिर्विरुध्यते । दृश्यते च जाह्नवीह्रदनिमग्नानां सर्वाङ्गशैत्योपलब्धिर्निदाघसमये च सकलशरीरपरितापोपलब्धिरिति । अत उत्तरं पठति—

## अविरोधश्चन्दनवत् ॥ २३ ॥

यथा हि हरिचन्दनविन्दुः शरीरैकदेशसंबद्धोऽपि सन्सकलदेहव्यापिनमाह्लादं करोत्येवमात्मापि देहैकदेशस्थः सकलदेहव्यापिनीमुपलब्धिं करिष्यति । त्वक्संबन्धनाच्चास्य सकलशरीरगता वेदना न विरुध्यते । त्वगात्मनोर्हि संबन्धः कृत्स्नायां त्वचि वर्तते त्वक्च कृत्स्नशरीरव्यापिनीति ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

अत्राह यदुक्तमविरोधश्चन्दनवदिति, तदयुक्तं दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वात् । सिद्धे ह्यात्मनो देहैकदेशस्थत्वे चन्दनदृष्टान्तो भवति । प्रत्यक्षं तु चन्दनस्यावस्थितिवैशेष्यमेकदेशस्थत्वं सकलदेहाह्लादनं च । आत्मनः पुनः सकलदेहोपलब्धिमात्रं प्रत्यक्षं नैकदेशवर्तित्वम् । अनुमेयं तु तदिति यदप्युच्येत । नचात्रानुमानं संभवति । किमात्मनः सकलशरीरगता वेदना त्वगिन्द्रियस्येव सकलदेहव्यापिनः सतः किंवा विभोर्नभस इवाहोस्विच्चन्दनविन्दोरिवाणोरेकदेशस्थस्येति संशयानतिवृत्तेरिति । अत्रोच्यते—नायं दोषः । कस्मात् । अभ्युपगमात् । अभ्युपगम्यते ह्यात्मनोऽपि चन्दनस्येव देहैकदेशवृत्तित्वमवस्थितिवैशेष्यम् । कथमित्युच्यते । हृदि ह्येष आत्मा पठ्यते वेदान्तेषु । 'हृदि ह्येष आत्मा' (प्रश्न० ३।६), 'स वा एष आत्मा हृदि' (छा० ८।३।३), 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ० ४।३।७) इत्याद्युपदे-

---

१ उद्धृत्य मानमुन्मानम् । २ बालः केशः । ३ तोत्रप्रोतायःशलाकाप्रमाराग्रं तस्माद्धृता मात्रा मानं यस्य स जीवस्तथा ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेभ्यः । तस्माद्दृष्टान्तदार्ष्टान्तिकयोरवैषम्याद्युक्तमेवैतदविरोधा-
दिति ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

चैतन्यगुणव्याप्तेर्वाऽणोरपि सतो जीवस्य सकलदेहव्यापि कार्यं न विरु-
ध्यते । यथा लोके मणिप्रदीपप्रभृतीनामपवरकैकदेशावर्तिनामपि प्रभाऽप-
वरकव्यापिनी सती कृत्स्नेऽपवरके कार्यं करोति तद्वत् । स्यात्कदाचिच्च-
न्दनस्य सावयवत्वात्सूक्ष्मावयवविसर्पणेनापि सकलदेह आह्लादयितृत्वं, न
त्वणोर्जीवस्यावयवाः सन्ति यैरयं सकलदेहं विप्रसर्पेदित्याशङ्क्य गुणाद्वा
लोकवदित्युक्तम् ॥ २५ ॥

कथं पुनर्गुणो गुणिव्यतिरेकेणान्यत्र वर्तेत । नहि पटस्य शुक्लो गुणः
पटव्यतिरेकेणान्यत्र वर्तमानो दृश्यते । प्रदीपप्रभावद्भवेदिति चेत् ।
न । तस्या अपि द्रव्यत्वाभ्युपगमात् । निविडावयवं हि तेजोद्रव्यं प्रदीपः,
प्रविरलावयवं तु तेजोद्रव्यमेव प्रभेति । अत उत्तरं पठति—

## व्यतिरेको गन्धवत् ॥ २६ ॥

यथा गुणस्यापि सतो गन्धस्य गन्धवद्द्रव्यव्यतिरेकेण वृत्तिर्भवति,
अप्राप्तेष्वपि कुसुमादिषु गन्धवत्सु कुसुमगन्धोपलब्धेः । एवमणोरपि
सतो जीवस्य चैतन्यगुणव्यतिरेको भविष्यति । अतश्चानैकान्तिकमेतद्गु-
णत्वाद्रूपादिवदाश्रयविश्लेषानुपपत्तिरिति । गुणस्यैव सतो गन्धस्याश्रय-
विश्लेषदर्शनात् । गन्धस्यापि सहैवाश्रयेण विश्लेष इति चेत् । न । यस्मा-
न्मूलद्रव्याद्विश्लेषस्तस्य क्षयप्रसङ्गात् । अक्षीयमाणमपि तत्पूर्वावस्थातो-
ऽवगम्यते । अन्यथा तत्पूर्वावस्थैर्गुरुत्वादिभिर्हीयेत । स्यादेतत् । गन्धाश्र-
याणां विश्लिष्टानामवयवानामल्पत्वात्सन्नपि विशेषो नोपलक्ष्यते । सूक्ष्मा
हि गन्धपरमाणवः सर्वतो विप्रसृता गन्धबुद्धिमुत्पादयन्ति नासिकापुट-
दमनुप्रविशन्त इति चेत् । न । अतीन्द्रियत्वात्परमाणूनां स्फुटगन्धोपल-
ब्धेश्च नागकेसरादिषु । नच लोके प्रतीतिर्गन्धवद्द्रव्यमाघ्रातमिति । गन्ध
एवाघ्रात इति तु लौकिकाः प्रतियन्ति । रूपादिष्वाश्रयव्यतिरेका-

१ गुणस्य द्रव्यव्यतिरेक आश्रयविश्लेषः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वगेर्गन्धस्याप्ययुक्त आश्रयव्यतिरेक इति चेत् । न । प्रत्यक्षत्वादनुमानाप्रवृत्तेः । तस्माद्यद्यथा लोके दृष्टं तत्तथैवानुमन्तव्यं निरूपकैर्नान्यथा । नहि रसो गुणो जिह्वयोपलभ्यत इत्यतो रूपादयोऽपि गुणा जिह्वयैवोपलभ्येरन्निति नियन्तुं शक्यते ॥ २६ ॥

## तथाच दर्शयति ॥ २७ ॥

हृदयायतनत्वमणुपरिमाणत्वं चात्मनोऽभिधाय तस्यैव 'आ लोमभ्य आ नखाग्रेभ्यः' ( छा० ८।८।१ ) इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

'प्रज्ञया शरीरं समारुह्य' ( कौपी० ३।६ ) इति चात्मप्रज्ञयोः कर्तृकरणभावेन पृथगुपदेशाच्चैतन्यगुणेनैवास्य शरीरव्यापिता गम्यते । 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' ( बृ० २।१।१७ ) इति च कर्तुः शारीरात्पृथग्विज्ञानस्योपदेश एतमेवाभिप्रायमुपोद्बलयति तस्मादणुरात्मेति ॥ २८ ॥

एवं प्राप्ते ब्रूमः—

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

तुशब्दः पक्षं व्यावर्तयति । नैतदस्त्यणुरात्मेति । उत्पत्त्यश्रवणाद्धि परस्यैव तु ब्रह्मणः प्रवेशश्रवणात्तादात्म्योपदेशाच्च परमेव ब्रह्म जीव इत्युक्तम् । परमेव चेद्ब्रह्म जीवस्तस्माद्यावत्परं ब्रह्म तावानेव जीवो भवितुमर्हति । परस्य च ब्रह्मणो विभुत्वमाम्नातम् । तस्माद्विभुर्जीवः । तथाच 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' ( बृ० ४।४।२२ ) इत्येवंजातीयका जीवविषया विभुत्ववादाः श्रौताः स्मार्ताश्च समर्थिता भवन्ति । नचाणोर्जीवस्य सकलशरीरगता वेदनोपपद्यते । त्वक्संबन्धात्स्यादिति चेत् । न । कण्टकतोदनेऽपि सकलशरीरगतैव वेदना प्रसज्येत । त्वक्कण्टकयोर्हि संयोगः कृत्स्नायां त्वचि वर्तते त्वक्च कृत्स्नशरीरव्यापिनीति । पादतल-

१ विज्ञानमिन्द्रियाणां ज्ञानशक्तिं विज्ञानेन चैतन्यगुणेनादाय [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव तु कण्टकनुन्नो वेदनां प्रति लभते । नचाणोर्गुणव्याप्ति
गुणस्य गुणिदेशत्वात् । गुणत्वमेव हि गुणिनमनाश्रित्य गुणस्य ही
प्रदीपप्रभायाश्च द्रव्यान्तरत्वं व्याख्यातम् । गन्धोऽपि गुणत्वाभ्यु
त्साश्रय एव संचरितुमर्हति । अन्यथा गुणत्वहानिप्रसङ्गात् । त
द्वैपायनेन–'उपलभ्याप्सु चेद्गन्धं केचिद्ब्रूयुरनैपुणाः । पृथिव्याम
विद्यादपो वायुं च संश्रितम्' इति । यदि च चैतन्यं जीवस्य
शरीरं व्याप्नुयान्नाणुर्जीवः स्यात् । चैतन्यमेव ह्यस्य स्वरूपमग्नेरि
प्रकाशौ । नात्र गुणगुणिविभागो विद्यत इति शरीरपरिमाणत्वं
त्याख्यातम् । परिशेषाद्विभुर्जीवः । कथं तर्ह्यणुत्वादिव्यपदेश इत्यत
तद्गुणसारत्वात्तु तद्व्यपदेश इति । तस्या बुद्धेर्गुणास्तद्गुणा इच्छा
सुखं दुःखमित्येवमादयस्तद्गुणाः सारः प्रधानं यस्यात्मनः संसारि
भवति स तद्गुणसारस्तस्य भावस्तद्गुणसारत्वम् । नहि बुद्धेर्गुणैर्वि
लस्यात्मनः संसारित्वमस्ति । बुद्ध्युपाधिधर्माध्यासनिमित्तं हि क
कृत्वादिलक्षणं संसारित्वमकर्तुरभोक्तुश्चासंसारिणो नित्यमुक्तस्य स
त्मनः । तस्मात्तद्गुणसारत्वाद्बुद्धिपरिमाणेनास्य परिमाणव्यपदेशः । त
न्त्यादिभिश्चास्योत्क्रान्त्यादिव्यपदेशो न स्वतः । तथाच–'बालाग्रशत
शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय
( श्वे० ५।९ ) इत्यणुत्वं जीवस्योक्त्वा तस्यैव पुनरानन्त्यमाह । त
समञ्जसं स्याद्यद्यौपचारिकमणुत्वं जीवस्य भवेत्पारमार्थिकं चान
नह्युभयं मुख्यमवकल्पेत । नचानन्त्यमौपचारिकमिति शक्यं वि
सर्वोपनिषत्सु ब्रह्मात्मभावस्य प्रतिपिपादयिषितत्वात् । तथेतरस्मिन्
'बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः' ( श्वे०
इति च बुद्धिगुणसंबन्धेनैवाराग्रमात्रतां शास्ति न स्वेनैवात्मना
षोऽणुरात्मा चेतसा वेदितव्यः' ( मुण्ड० ३।१।९ ) इत्यत्रापि न
स्याणुपरिमाणत्वं शिष्यते, परस्यैवात्मनश्चक्षुराद्यनवग्राह्यत्वेन ज्ञा
गम्यत्वेन च प्रकृतत्वात् । जीवस्यापि च मुख्याणुपरिमा
पत्तेः । तस्माद्दुर्ज्ञानत्वाभिप्रायमिदमणुत्ववचनमुपाध्यभिप्रायं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

व्यम् । तथा 'प्रज्ञया शरीरं समारुह्य' ( कौषी० ३।६ ) इत्येवंजातीयकेष्वपि भेदोपदेशेषु बुद्ध्यैवोपाधिभूतया जीवः शरीरं समारुह्येत्येवं योजयितव्यम् । व्यपदेशमात्रं वा, शिलापुत्रकस्य शरीरमित्यादिवत् । नह्यत्र गुणगुणिविभागोऽपि विद्यत इत्युक्तम् । हृदयायतनत्ववचनमपि बुद्धेरेव तदायतनत्वात् । तथोत्क्रान्त्यादीनामप्युपाध्यायत्ततां दर्शयति— 'कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति' ( प्रश्न० ६।३ ) 'स प्राणमसृजत' ( प्र० ६।४ ) इति । उत्क्रान्त्यभावे हि गत्यागत्योरप्यभावो विज्ञायते । नह्यनपसृप्तस्य देहाद्गत्यागती स्याताम् । एवमुपाधिगुणसारत्वाज्जीवस्याणुत्वादिव्यपदेशः प्राज्ञवत् । यथा प्राज्ञस्य परमात्मनः सगुणेषूपासनेषूपाधिगुणसारत्वादणीयस्त्वादिव्यपदेशः—'अणीयान्व्रीहेर्वा यवाद्वा' ( छा० ३।१४।२ ) 'मनोमयः प्राणशरीरः सर्वगन्धः सर्वरसः सत्यकामः सत्यसंकल्पः' ( छा० ३।१४।२ ) इत्येवंप्रकारस्तद्वत् । स्यादेतद्यदि बुद्धिगुणसारत्वादात्मनः संसारित्वं कल्प्येत, ततो बुद्ध्यात्मनोर्भिन्नयोः संयोगावसानमवश्यंभावीत्यतो बुद्धिवियोगे सत्यात्मनो विभक्तस्यानालक्ष्यत्वादसत्त्वमसंसारित्वं वा प्रसज्येतेति ॥ २९ ॥

अत उत्तरं पठति—

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

नेयमनन्तरनिर्दिष्टदोषप्राप्तिराशङ्कनीया । कस्मात् । यावदात्मभावित्वाद्बुद्धिसंयोगस्य । यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति । यावदेव चायं बुद्ध्युपाधिसंबन्धस्तावज्जीवस्य जीवत्वं संसारित्वं च । परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिसंबन्धपरिकल्पितस्वरूपव्यतिरेकेणास्ति । नहि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते । 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' ( बृ० ३।७।२३ ), 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' ( छा० ६।८।७ ), 'तत्त्वमसि' ( छा० ६।१।६ ), 'अहं ब्रह्मास्मि'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(बृ० १।४।७) इत्यादिश्रुतिशतेभ्यः । कथं पुनरवगम्यते
भावी बुद्धिसंयोग इति । तद्दर्शनादित्याह । तथाहि शास्त्रं
'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः
लोकावनुसंचरति ध्यायतीव लेलायतीव' (बृ० ४।३।४) इ
तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति । प्रदेशान्तरे
मयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इति विज्ञानमयस्य
दिभिः सह पाठात् । बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेतं
लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते तद्
समानः सन्नुभौ लोकावनुसंचरति' इति च लोकान्तरगमनेऽपि
बुद्ध्या दर्शयति । केन समानस्तयैव बुद्ध्येति गम्यते संनिधानात्
दर्शयति—'ध्यायतीव लेलायतीव' (बृ० ४।३।७) इति ।
भवति—नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ
तीव चलन्त्यां बुद्धौ चलतीवेति । अपिच मिथ्याज्ञानपुरःसरोऽयम्
बुद्ध्युपाधिसंबन्धः । नच मिथ्याज्ञानस्य सम्यग्ज्ञानादन्यत्र
स्तीत्यतो यावद्ब्रह्मात्मतानवबोधस्तावदयं बुद्ध्युपाधिसंबन्धो न
दर्शयति च—'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वेता
इति ॥ ३० ॥

नन्वु सुषुप्तप्रलययोर्न शक्यते बुद्धिसंबन्ध आत्मनोऽभ्युपगन्तुम्
सोम्य तदा संपन्नो भवति स्वमपीतो भवति' (छा० ६।८।१) इति
कृत्स्नविकारप्रलयाभ्युपगमाच्च । तत्कथं यावदात्मभावित्वं बुद्धिसं
त्रोच्यते—

## पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिषु
मानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति,

१ विज्ञानमयो बुद्धिप्रचुरः । २ आदित्यवर्णं स्वप्रकाशम् । तमसः परस्तात्
३ सता परमात्मना । ४ पुंस्त्वं रेतः, आदिपदेन श्मश्र्वादिग्रहः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGa

नान्युत्पद्यन्ते पण्ढादीनामपि तदुत्पत्तिप्रसङ्गात्, एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति। एवं ह्येतद्युज्यते। नह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति। अतिप्रसङ्गात्। दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्—'सति संपद्य न विदुः सति संपद्यामह इति', 'त इह व्याघ्रो वा सिंहो वा' (छा० ६।९।३) इत्यादिना। तस्मात्सिद्धमेतद्यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ॥ ३१ ॥

**नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ३२**

तच्चात्मन उपाधिभूतमन्तःकरणं मनो बुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्र तत्राभिलप्यते। क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति। तच्चैवंभूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम्। अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात्। आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां संनिधाने प्रति नित्यमेवोपलब्धिः प्रसज्येत। अथ सत्यपि हेतुसमवधाने फलाभावस्ततो नित्यमेवानुपलब्धिः प्रसज्येत। नचैवं दृश्यते। अथवान्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः। नचात्मनः शक्तिप्रतिबन्धः संभवति। अविक्रियत्वात्। नापीन्द्रियस्य। नहि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत। तस्माद्यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः। तथाच श्रुतिः—'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' (बृ० १।५।३) इति, 'मनसा ह्येव पश्यति मनसा शृणोति' (बृ० १।५।३) इति। कामादयश्चास्य वृत्तय इति दर्शयति 'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ० १।५।३) इति। तस्माद्युक्तमेतत् 'तद्गुणसारत्वात्तद्व्यपदेशः' इति ॥ ३२ ॥

### १४ कर्त्रधिकरणम्। सू० ३३–४०

**कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥**

तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते। कर्ता चायं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवः स्यात् । कस्मात् । शास्त्रार्थवत्त्वात् । एवंच 'यजेत', 'दद्यात्' इत्येवंविधं विधिशास्त्रमर्थवद्भवति । अन्यथा तदनर्थकं तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति । नचाऽसति कर्तृत्वे चेत । तथेदमपि शास्त्रमर्थवद्भवति 'एष हि द्रष्टा श्रोता मन्ता कर्ता विज्ञानात्मा पुरुषः' (प्र० ५।९) इति ॥ ३३ ॥

## विहारोपदेशात् ॥ ३४ ॥

इतश्च जीवस्य कर्तृत्वं, यज्जीवप्रक्रियायां [1]संध्ये स्थाने विहारमुपदिशति—'स [2]ईयतेऽमृतो यत्र कामम्' (बृ० ४।३।१२) इति, 'स्वे शरीरे यथाकामं परिवर्तते' (बृ० २।१।१८) इति च ॥ ३४ ॥

## उपादानात् ॥ ३५ ॥

इतश्चास्य कर्तृत्वं, यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति—'तदेषां [3]प्राणानां विज्ञानेन विज्ञानमादाय' (बृ० २।१।१७) इति, 'प्राणान्गृहीत्वा' (बृ० २।१।१८) इति च ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

इतश्च जीवस्य कर्तृत्वं, यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रम्—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' (तै० २।५।१) इति । ननु विज्ञानशब्दो बुद्धौ समधिगतः कथमनेन जीवस्य कर्तृत्वं सूच्यत इति । नेत्युच्यते । जीवस्यैवैष निर्देशो न बुद्धेः । न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्यात् । विज्ञानेनेत्येवं निरदेक्ष्यत् । तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृ० २।१।१७) इति । इह तु 'विज्ञानं यज्ञं तनुते' (तै० २।५।१) इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः ॥ ३६ ॥

अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्स स्वतन्त्रः

---

१ संध्ये स्थाने स्वप्नावस्थायाम् । २ ईयते गच्छति । ३ प्राणानामिन्द्रियाणां विज्ञानेन बुद्ध्या विज्ञानं ग्रहणशक्तिमादाय स्वापे जीवो हृदयमेतीति योजना ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

हितं चैवात्मनो नियमेन संपादयेन्न विपरीतम् । विपरीतमपि तु संपादयन्नुपलभ्यते । नच स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इति । अत उत्तरं पठति—

## उपलब्धिवदनियमः ॥ ३७ ॥

यथायमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपलभत एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति । उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेत् । न । विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम् । उपलब्धौ त्वनन्यापेक्षत्वमात्मनश्चैतन्ययोगात् । अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति देशकालनिमित्तविशेषापेक्षत्वात् । नच सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते । भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम् । सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति । यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्ययः स्यात् । करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत । सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम् । अहंकारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात् । अहं गच्छाम्यहमागच्छाम्यहं भुञ्जेऽहं पिबामीति च । तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत्कल्पयितव्यम् । शक्तोऽपि हि सन्कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यत इति । ततश्च संज्ञामात्रे विवादः स्यान्न वस्तुभेदः कश्चित् । करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु— 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (बृ० २।४।५), 'ओमित्येवं ध्यायथ आ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मानम्' (मुण्ड० २।२।६) इत्येवंलक्षणः, सोऽप्यसत्यात्मक नोपपद्येत । तस्मादप्यस्य कर्तृत्वसिद्धिः ॥ ३९ ॥

### १५ तक्षाधिकरणम् । सू० ४०

### यथा च तक्षोभयथा ॥ ४० ॥

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्र तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते । शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वमपवादहेत्वभावादि प्राप्ते ब्रूमः । न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्ष कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः संभवति, अग्नेरिवौ नच कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरू ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात्पुरुषार्थः से तत्परिहारश्च निमित्तपरिहारात् । यथाग्नेर्दहनशक्तियुक्तस्यापि योगाद्दहनकार्याभावस्तद्वत् । न । निमित्तानामपि शक्तिलक्षणेन संबद्धानामत्यन्तपरिहारासंभवात् । ननु मोक्षसाधनविधानान्मो स्यति । न । साधनायत्तस्यानित्यत्वात् । अपिच नित्यशुद्धबुद्ध तिपादनान्मोक्षसिद्धिरभिमता । तादृगात्मप्रतिपादनं च न ह्य कर्तृत्वेऽवकल्पेत । तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभा तथाच श्रुतिः—'ध्यायतीव लेलायतीव' (बृ० ४।३।७) 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (कण्ठ० ३।४) इति धिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति । नहि परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते । 'नान्योऽतोऽस्ति (बृ० ४।३।२३) इत्यादिश्रवणात् । पर एव तर्हि संसारी कर्ता प्रसज्येत, परस्मादन्यश्चेच्चितिमाञ्जीवः कर्ता बुद्ध्यादिसंघातव्यति स्यात् । न । अविद्याप्रत्युपस्थापितत्वात्कर्तृत्वभोक्तृत्वयोः । तथाच —'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृ० २। इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

भोक्तृत्वे निवारयति—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ० २।४।१४) इति । तथा स्वप्नजागरितयोरात्मन उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति—'तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्' (बृ० ४।३।२१) इत्यारभ्य 'एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' (बृ० ४।३।३२) इत्युपसंहारात् । तदेतदाहाचार्यः—यथा च तक्षोभयथा इति । त्वर्थे चायं चः पठितः । नैवं मन्तव्यं स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति । यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरणसंघातोऽकर्ता सुखी भवति संप्रसादावस्थायाम् । तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृतः सुखी भवति । तक्षदृष्टान्तश्चैतावतांऽशेन द्रष्टव्यः । तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति । स्वशरीरेण त्वकर्तैव । एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मनआदीनि करणानि कर्ता भवति, स्वात्मना त्वकर्तैवेति । नत्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा मनआदीनि करणान्यात्मोपाददीत न्यस्येद्वा । यत्तूक्तं शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति । तन्न । विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति न कर्तृत्वमात्मनः प्रतिपादयति । नच स्वाभाविकमस्य कर्तृत्वमस्ति ब्रह्मात्मत्वोपदेशादित्यवोचाम । तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते । कर्ता विज्ञानात्मा पुरुष इत्येवंजातीयकमपि

---

१ शोकान्तरं दुःखास्पृष्टम् । २ गतिः प्राप्यं, लोको भोग्यं सुखम् । ३ अन्यैरप्रेर्यत्वं स्वस्थत्वम्, मानसप्रयत्नराहित्यं निर्वृतत्वम्, कायचेष्टाशून्यत्वं निर्व्यापारत्वम् । ४ संप्रसादः सुषुप्तिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति ।
विहारोपादाने परिहृते । तयोरप्यनुवादरूपत्वात् । ननु संध्ये
प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परिवर्तत इति विहार उपदिश्य
केवलस्यात्मनः कर्तृत्वमावहति । तथोपादानेऽपि 'तदेषां प्राणानां
नेन विज्ञानमादाय' इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केव
त्मनः कर्तृत्वं गमयत इति । अत्रोच्यते—न तावत्संध्ये स्थानेऽ
त्मनः करणविरमणमस्ति । 'सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति'
४।३।७) इति तत्रापि धीसंबन्धश्रवणात् । तथाच स्मरन्ति—
याणामुपरमे मनोऽनुपरतं यदि । सेवते विषयानेव तद्विद्यात्स्वप्न
इति । 'कामादयश्च मनसो वृत्तयः' इति श्रुतिः । ताश्च स्वप्ने दृ
तस्मात्समना एव स्वप्ने विहरति । विहारोऽपि च तत्रत्यो वा
एव नतु पारमार्थिकोऽस्ति । तथाच श्रुतिरिवाकारानुबद्धमेव स्व
वर्णयति—'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि'
(बृ० ४।३।१३) इति । लौकिका अपि तथैव स्वप्नं कथयन्ति
क्षमिव गिरिशृङ्गमद्राक्षमिव वनराजिमिति । तथोपादानेऽपि
करणेषु कर्मकरणविभक्तिनिर्देशस्तथापि तत्संपृक्तस्यैवात्मनः कर्तृ
व्यम् । केवले कर्तृत्वासंभवस्य दर्शितत्वात् । भवति च लोकेऽने
विवक्षा योधा युध्यन्ते योधै राजा युध्यत इति । अपिचास्मिन्
करणव्यापारोपरममात्रं विवक्ष्यते न स्वातन्त्र्यं कस्यचिदबुद्धिपूर्व
स्वापे करणव्यापारोपरमस्य दृष्टत्वात् । यस्त्वयं व्यपदेशो दर्शितः
यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं प्रापयति । विज्ञानशब्द
प्रसिद्धत्वात् । मनोनन्तरं पाठाच्च । 'तस्य श्रद्धैव शिरः' (तै०
इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात् । श्रद्धा
बुद्धिधर्मत्वप्रसिद्धेः । 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते'
२।५।१ ) इति च वाक्यशेषात् । ज्येष्ठत्वस्य च प्रथमजत्व

१ जक्षत् भुञ्जान इव ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

असिद्धत्वात्। 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात्। नच बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति। सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्। उपलब्ध्यपेक्षं त्वेषां करणानां करणत्वं, सा चात्मनः। नच तस्यामप्यस्य कर्तृत्वमस्ति। नित्योपलब्धिस्वरूपत्वात्। अहंकारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति। अहंकारस्याप्युपलभ्यमानत्वात्। नचैवं सति करणान्तरकल्पनाप्रसङ्गः। बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः। यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात्। तस्मात्कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम्॥ ४०॥

## १६ परायत्ताधिकरणम्। सू० ४१–४२

## परात्तु तच्छ्रुतेः॥ ४१॥

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितं, तत्किमनपेक्ष्येश्वरं भवत्याहोस्विदीश्वरापेक्षमिति भवति विचारणा। तत्र प्राप्तं तावन्नेश्वरमपेक्षते जीवः कर्तृत्व इति। कस्मात्। अपेक्षाप्रयोजनाभावात्। अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति। तस्य किमीश्वरः करिष्यति। नच लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियास्वनडुदादिवदीश्वरोऽपरोऽपेक्षितव्य इति। क्लेशात्मकेन च कर्तृत्वेन जन्तून्संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम्। ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (ब्र० २।१।३४) इत्युक्तम्। सत्यमुक्तं सति त्वीश्वरस्य सापेक्षत्वसंभवे। सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोस्तयोश्च सद्भावः सति जीवस्य कर्तृत्वे। तदेव चेत्कर्तृत्वमीश्वरापेक्षं स्यात्किंविषयमीश्वरस्य सापेक्षत्वमुच्येत। अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत। तस्मात्स्वत एवास्य कर्तृत्वमिति। एतां प्राप्तिं तुशब्देन व्यावर्त्य प्रतिजानीते— 'परात्' इति। अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात्सा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य
तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति । कुतः । त
यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके
कर्मसु नेश्वरकारणत्वं प्रसिद्धं, तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हे
श्रुतेरवसीयते । तथाहि श्रुतिर्भवति—'एप ह्येव साधु कर्म कार
यमेभ्यो लोकेभ्य उन्निनीपते । एप ह्येवासाधु कर्म कारयति तं
निनीपते' ( कौपी० ३।८ ) इति । 'य आत्मनि तिष्ठन्नात्मा
यमयति' इति चैवंजातीयका ॥ ४१ ॥

नन्वेवमीश्वरस्य कारयितृत्वे सति वैपम्यनैर्घृण्ये स्यातामकृ
मश्च जीवस्येति । नेत्युच्यते—

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥**

तुशब्दश्चोदितदोपव्यावर्तनार्थः । कृतो यः प्रयत्नो जीवस्य धर्मा
णस्तदपेक्ष एवैनमीश्वरः कारयति । ततश्चैते चोदिता दोपा न प्रस
जीवकृतधर्माधर्मवैपम्यापेक्ष एव तत्तत्फलानि विपमं विभजेत्पर्ज
श्वरो निमित्तत्वमात्रेण । यथा लोके नानाविधानां गुच्छगुल्
व्रीहियवादीनां चासाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां
निमित्तं भवति पर्जन्यः । नह्यसति पर्जन्ये रसपुष्पपलाशादिवै
जायते, नाप्यसत्सु स्वस्वबीजेपु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरः
भाशुभं विदध्यादिति श्लिष्यते । ननु कृतप्रयत्नापेक्षत्वमेव जीव
यत्ते कर्तृत्वे नोपपद्यते । नैप दोपः । परायत्तेऽपि हि कर्तृत्वे
जीवः । कुर्वन्तं हि तमीश्वरः कारयति । अपिच पूर्वप्रयत्नमपे
कारयति पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात्संसार
वद्यम् । कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति । विहितप्र
वैयर्थ्यादिभ्य इत्याह । एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न ह
इत्येवंजातीयकस्य विहितस्य प्रतिपिद्धस्य चावैयर्थ्यं भवति ।
तदनर्थकं स्यात् । ईश्वर एव विधिप्रतिपेधयोर्नियुज्येत । अत्यन्त

१ अतिदीर्घवल्लीमन्ययो गुच्छाः, गुल्मास्तु ह्रस्ववल्लय इति भेदः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

त्वाज्जीवस्य । तथा विहितकारिणमप्यनर्थेन संसृजेत्प्रतिपिद्धकारिणमप्यर्थेन । ततश्च प्रामाण्यं वेदस्यास्तमियात् । ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यं तथा देशकालनिमित्तानां पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति ॥ ४२ ॥

## १७ अंशाधिकरणम् । सू० ४३–५३

### अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥

जीवेश्वरयोरुपकार्योपकारकभाव उक्तः । स च संबद्धयोरेव लोके दृष्टो यथा स्वामिभृत्ययोर्यथा वाग्निविस्फुलिङ्गयोः । ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात्किं स्वामिभृत्यवत्संबन्ध आहोस्विदग्निविस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति । अथवा स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव संबन्ध इति प्राप्नोति । अतो ब्रवीत्यंश इति । जीव ईश्वरस्यांशो भवितुमर्हति, यथाग्नेर्विस्फुलिङ्गः । अंश इवांशः । नहि निरवयवस्य मुख्योंऽशः संभवति । कस्मात्पुनर्निरवयवत्वात्स एव न भवति । नानाव्यपदेशात् । 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ) 'एतमेव विदित्वा मुनिर्भवति' 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते । ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यत इत्यत आह—अन्यथा चापीति । नच नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः । किं तर्ह्यन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः । तथाहि—एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते—'ब्रह्म दाशा ब्रह्म दासा ब्रह्मेवेमे कितवाः' इत्यादिना । दाशा य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिष्वात्मानमुपक्षपयन्ति, ये चान्ये कितवा द्यूतकृतस्ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जी-

---

१ पुरुषकारः प्रयत्नः । २ पूर्वोक्तदोषोऽकृताभ्यागमादिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वानां ब्रह्मत्वमाह । तथान्यत्रापि ब्रह्मप्रक्रियायामेवायमर्थः प्र 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो वंचसि त्वं जातो भवसि विश्वतोमुखः' (श्वे० ४।३) इति । रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति न्योऽतोऽस्ति द्रष्टा' (बृ० ३।७।२३) इत्यादिश्रुतिभ्यश्चास्यार्थस्य चैतन्यं चाविशिष्टं जीवेश्वरयोर्यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम् । दाभेदावगमाभ्यामंशत्वावगमः ॥ ४३ ॥

कुतश्चांशत्वावगमः—

मन्त्रवर्णाच्च ॥ ४४ ॥

मन्त्रवर्णश्चैतमर्थमवगमयति 'तावानस्य महिमा ततो ज्यायांश्च पादोऽस्य सर्वाभूतानि त्रिपादस्यामृतं दिवि' (छा० ३।१२।६) अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति । ' वैभूतान्यन्यत्र तीर्थेभ्यः' इति प्रयोगात् । अंशः पादो भाग न्तरम् । तस्मादप्यंशत्वावगमः ॥ ४४ ॥

कुतश्चांशत्वावगमः—

अपिच स्मर्यते ॥ ४५ ॥

ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते—'ममैवांशो जीवभूतः सनातनः' (१५।७) इति । तस्मादप्यंशत्वावगमः । स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो लोके प्रसिद्ध इति । लोके प्रसिद्धिस्तथापि शास्त्रात्त्वत्रांशांशित्वमीशित्रीशितव्यभावश्च यते । निरतिशयोपाधिसंपन्नश्चेश्वरो निहीनोपाधिसंपन्ना जीवा न किंचिद्विप्रतिषिध्यते ॥ ४५ ॥

अत्राह—ननु जीवस्येश्वरांशत्वाभ्युपगमे तदीयेन संसारदुः गेनांशिन ईश्वरस्यापि दुःखित्वं स्यात् । यथा लोके हस्तपादाद्य

---

१ वञ्चसि गच्छसि । २ यदास्ते यो नामरूपे निर्माय प्रविश्य व्यवहरन् ज्ञानसृतो भवति । ३ अस्य सहस्रशीर्षपुरुषस्य तावान्प्रपञ्चो महिमा विभूतिः प्रपञ्चात्पुरुषो ज्यायान्महत्तरः । ४ तीर्थानि शास्त्रोक्तकर्माणि तेभ्योऽन्यत्र सामकुर्वन्ब्रह्म प्राप्नोतीत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGan

गतेने दुःखेनाङ्गिनो देवदत्तस्य दुःखित्वं तद्वत् । ततश्च तत्प्राप्तानां महत्तरं दुःखं प्राप्नुयात् । अतो वरं पूर्वावस्थः संसार एवास्त्विति सम्यग्दर्शनानर्थक्यप्रसङ्गः स्यादिति । अत्रोच्यते—

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

यथा जीवः संसारदुःखमनुभवति नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे । जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्कृतेन दुःखेन दुःख्यहमित्यविद्यया कृतं दुःखोपभोगमभिमन्यते । नैवं परमेश्वरस्य देहाद्यात्मभावो दुःखाभिमानो वास्ति । जीवस्याप्यविद्याकृतनामरूपनिर्वृत्तदेहेन्द्रियाद्युपाध्यविवेकभ्रमनिमित्त एव दुःखाभिमानो नतु पारमार्थिकोऽस्ति । यथाच स्वदेहगतदाहच्छेदादिनिमित्तं दुःखं तदभिमानभ्रान्त्यानुभवति तथा पुत्रमित्रादिगोचरमपि दुःखं तदभिमानभ्रान्त्यैवानुभवत्यहमेव पुत्रोऽहमेव मित्रमित्येवं स्नेहवशेन पुत्रमित्रादिष्वभिनिविशमानः । ततश्च निश्चितमेतदवगम्यते—मिथ्याभिमानभ्रमनिमित्त एव दुःखानुभव इति । व्यतिरेकदर्शनाच्चैवमवगम्यते । तथाहि—पुत्रमित्रादिमत्सु बहुषूपविष्टेषु तत्संबन्धाभिमानिष्वितरेषु च पुत्रो मृतो मित्रं मृतमित्येवमाद्युद्घोषिते येषामेव पुत्रमित्रादिमत्त्वाभिमानस्तेषामेव तन्निमित्तं दुःखमुत्पद्यते नाभिमानहीनानां परिव्राजकादीनाम् । अतश्च लौकिकस्यापि पुंसः सम्यग्दर्शनार्थवत्त्वं दृष्टं, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तरमपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति । तस्मान्नास्ति सम्यग्दर्शनानर्थक्यप्रसङ्गः । प्रकाशादिवदिति निदर्शनोपन्यासः । यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थतस्तद्भावं प्रतिपद्यते । यथा चाकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा चोदशरावादिकम्पनात्तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि न तद्वान्सूर्यः कम्पते, एवमविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वानीश्वरो दुःखा-

१ इतरेष्वभिमानशून्येषु ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यते । जीवस्यापि तु दुःखप्राप्तिरविद्यानिमित्तैवेत्युक्तम् । तथाचा
मित्तजीवभावव्युदासेन ब्रह्मभावमेव जीवस्य प्रतिपादयन्ति
'तत्त्वमसि' इत्येवमादयः, तस्मान्नास्ति जैवेन दुःखेन प
दुःखित्वप्रसङ्गः ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

स्मरन्ति च व्यासादयो यथा जैवेन दुःखेन न परमात्मा दुः
इति । 'तत्र[1] यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न
फलैश्चापि पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योऽसौ मोक्ष
युज्यते । स सप्तदशकेनापि राशिना युज्यते पुनः' इति । चशब्दा
नन्ति चेति वाक्यशेषः । 'तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्यो
कशीति' ( श्वे० ४।६ ) इति । 'एकस्तथा सर्वभूतान्तरात्मा न
लोकदुःखेन बाह्यः' ( कठ० ५।११ ) इति च ॥ ४७ ॥

अत्राह—यदि तर्ह्येक एव सर्वेषां भूतानामन्तरात्मा स्यात्कथ
रिहारौ स्यातां लौकिकौ वैदिकौ चेति । ननु चांशो जीव ईश्वरस्ये
तद्भेदाच्चानुज्ञापरिहारौ तदाश्रयावव्यतिकीर्णावुपपद्येते किमत्र चोद्य
उच्यते—नैतदेवम् । अनंशत्वमपि हि जीवस्याभेदवादिन्यः श्रुत
पादयन्ति—'तत्सृष्ट्वा तदेवानुप्राविशत्' ( तै० २।६।१ ),
तोऽस्ति द्रष्टा' ( बृ० ३।७।२३ ), 'मृत्योः[2] स मृत्युमाप्नोति य इ
पश्यति' ( बृ० ४।४।१९ ), 'तत्त्वमसि' ( छ० ६।८।७ ),
ब्रह्मास्मि' ( बृ० १।४।१० ) इत्येवंजातीयकाः । ननु भेदा
माभ्यामंशत्वं सिद्ध्यतीत्युक्तम् । स्यादेतदेवं यद्युभावपि
प्रतिपिपादयिषितौ स्याताम्, अभेद एव त्वत्र प्रतिपिपाद
ब्रह्मात्मत्वप्रतिपत्तौ पुरुषार्थसिद्धेः । स्वभावप्राप्तस्तु भेदोऽनूद्य
निरवयवस्य ब्रह्मणो मुख्योंऽशो जीवः संभवतीत्युक्तम् । तस्मात्

---

१ तत्र जीवपरयोर्मध्ये । कर्मात्मा कर्माश्रयो जीवः । सप्तदशकेन दशे
प्राणाः मनो बुद्धिश्चेति सप्तदशसंख्याको राशिर्लिङ्गम् । २ मृत्योः स मृत्युं
नानेव कल्पितभेदशालि चेतनाचेतनात्मकं विश्वं पश्यति स मृत्योरनन्तरं
णादिपरम्परारूपं संसारं प्राप्नोतीत्यर्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

सर्वेषां भूतानामन्तरात्मा जीवभावेनावस्थित इत्यतो वक्तव्याऽनुज्ञापरिहारोपपत्तिः ॥ ४७ ॥

तां ब्रूमः—

**अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥**

'ऋतौ भार्यामुपेयात्' इत्यनुज्ञा। 'गुर्वङ्गनां नोपगच्छेत्' इति परिहारः। तथा 'अग्नीषोमीयं पशुं संज्ञपयेत्' इत्यनुज्ञा। 'न हिंस्यात्सर्वा भूतानि' इति परिहारः। एवं लोकेऽपि मित्रमुपसेवितव्यमित्यनुज्ञा। शत्रुः परिहर्तव्य इति परिहारः। एवंप्रकारावनुज्ञापरिहारावेकत्वेऽप्यात्मनो देहसंबन्धात्स्याताम्। देहैः संबन्धो देहसंबन्धः। कः पुनर्देहसंबन्धः। देहादिरयं संघातोऽहमेवेत्यात्मनि विपरीतप्रत्ययोत्पत्तिः। दृष्टा च सा सर्वप्राणिनामहं गच्छाम्यहमागच्छाम्यहमन्धोऽहमनन्धोऽहं मूढोऽहममूढ इतीत्येवमात्मिका। नह्यस्याः सम्यग्दर्शनादन्यन्निवारकमस्ति। प्राक्तु सम्यग्दर्शनात्प्रततैषा भ्रान्तिः सर्वजन्तुषु। तदेवमविद्यानिमित्तदेहाद्युपाधिसंबन्धकृताद्विशेषादैकात्म्याभ्युपगमेऽप्यनुज्ञापरिहाराववकल्प्येते। सम्यग्दर्शिनस्तर्ह्यनुज्ञापरिहारानर्थक्यं प्राप्तम्। न। तस्य कृतार्थत्वान्नियोज्यत्वानुपपत्तेः। हेयोपादेययोर्हि नियोज्यो नियोक्तव्यः स्यात्। आत्मनस्त्वतिरिक्तं हेयमुपादेयं वा वस्त्वपश्यन्कथं नियुज्येत। नचात्मात्मन्येव नियोज्यः स्यात्। शरीरव्यतिरेकदर्शिन एव नियोज्यत्वमिति चेत्। न। तत्संहतत्वाभिमानात्। सत्यं व्यतिरेकदर्शिनो नियोज्यत्वं, तथापि व्योमादिवद्देहाद्यसंहतत्वमपश्यत एवात्मनो नियोज्यत्वाभिमानः। नहि देहाद्यसंहतत्वदर्शिनः कस्यचिदपि नियोगो दृष्टः। किमुतैकात्म्यदर्शिनः। नच नियोगाभावात्सम्यग्दर्शिनो यथेष्टचेष्टाप्रसङ्गः। सर्वत्राभिमानस्यैव प्रवर्तकत्वादभिमानाभावाच्च सम्यग्दर्शिनः। तस्माद्देहसंबन्धादेवानुज्ञापरिहारौ। ज्योतिरादिवत्। यथा ज्योतिष एकत्वेऽप्यग्निः क्रव्यात्परिह्रियते नेतरः। यथाच प्रकाश एकस्यापि सवितुरमेध्यदेशसंबद्धः

---

१ प्रतता संतता। २ विशेषो भेदः। ३ ... [illegible]

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परिह्रियते नेतरः शुचिभूमिष्ठः । यथा भौमाः प्रदेशा वज्र
उपादीयन्ते । भौमा अपि सन्तो नरकलेवरादयः परिह्रियन्ते
मूत्रपुरीषं गवां पवित्रतया परिगृह्यते तदेव जात्यन्तरे परिवर्ज्यते तद्

## असंततेश्चाव्यतिकरः ॥ ४९ ॥

स्यातां नामानुज्ञापरिहारावेकस्याप्यात्मनो देहविशेषयोगात् । कर्मफलसंबन्धः स चैकात्म्याभ्युपगमे व्यतिकीर्येत स्वाम्ये चेत् । नैतदेवम् । असंततेः । नहि कर्तुर्भोक्तुश्चात्मनः संततः रीरैः संबन्धोऽस्ति । उपाधितन्त्रो हि जीव इत्युक्तम् । उपा नास्ति जीवसंतानः । ततश्च कर्मव्यतिकरः फलव्यतिकरो वा ष्यति ॥ ४९ ॥

## आभास एव च ॥ ५० ॥

आभास एव चैष जीवः परस्यात्मनो जलसूर्यकादिवत्प्र न स एव साक्षात् । नापि वस्त्वन्तरम् । अतश्च यथा नैकस्मि कम्पमाने जलसूर्यकान्तरं कम्पते, एवं नैकस्मिञ्जीवे कर्मफ जीवान्तरस्य तत्संबन्धः । एवमप्यव्यतिकर एव कर्मफलयोः । सस्य चाविद्याकृतत्वात्तदाश्रयस्य संसारस्याविद्याकृतत्वोपपत्तिरिति दासेन च पारमार्थिकस्य ब्रह्मात्मभावस्योपदेशोपपत्तिः । येषां आत्मानस्ते च सर्वे सर्वगतास्तेषामेवैष व्यतिकरः प्राप्नोति । बहवो विभवश्चात्मानश्चैतन्यमात्रस्वरूपा निर्गुणा निरतिश साधारणं प्रधानं तन्निमित्तैषां भोगापवर्गसिद्धिरिति सांख्याः बहुत्वे विभुत्वे च घटकुड्यादिसमाना द्रव्यमात्रस्वरूपा आत्मानस्तदुपकरणानि चाणूनि मनांस्यचेतनानि । तत्रात्मद्रव्या द्रव्याणां च संयोगान्नवेच्छादयो वैशेषिका आत्मगुणा चाव्यतिकरेण प्रत्येकमात्मसु समवयन्ति स संसारः । तेषां त्मगुणानामत्यन्तानुत्पादो मोक्ष इति काणादाः । तत्र सांख्या तन्यस्वरूपत्वात्सर्वात्मनां संनिधानाद्यविशेषाच्चैकस्य सुखदुःख

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

षेषां सुखदुःखसंबन्धः प्राप्नोति । स्यादेतत् । प्रधानप्रवृत्तेः पुरुषकैवल्यार्थत्वाद्व्यवस्था भविष्यति । अन्यथा हि स्वविभूतिख्यापनार्था प्रधानप्रवृत्तिः स्यात् । तथाचानिर्मोक्षः प्रसज्येतेति । नैतत्सारम् । नह्यभिलषितसिद्धिनिबन्धना व्यवस्था शक्या विज्ञातुम् । उपपत्त्या तु कयाचिद्व्यवस्थोच्येत । असत्यां पुनरुपपत्तौ कामं मा भूदभिलषितं पुरुषकैवल्यं, प्राप्नोति तु व्यवस्थाहेत्वभावाद्व्यतिकरः काणादानामपि यदैकेनात्मना मनः संयुज्यते तदात्मान्तरैरपि नान्तरीयकः संयोगः स्यात्संनिधानाद्यविशेषात् । ततश्च हेत्वविशेषात्फलाविशेष इत्येकस्यात्मनः सुखदुःखयोगे सर्वात्मनामपि समानं सुखदुःखित्वं प्रसज्येत ॥ ५० ॥

स्यादेतत् । अदृष्टनिमित्तो नियमो भविष्यतीति । नेत्याह—

## अदृष्टानियमात् ॥ ५१ ॥

बहुष्वात्मस्वाकाशवत्सर्वगतेषु प्रतिशरीरं बाह्याभ्यन्तराविशेषेण संनिहितेषु मनोवाक्कायैर्धर्माधर्मलक्षणमदृष्टमुपार्ज्यते । सांख्यानां तावत्तदनात्मसमवायि प्रधानवर्ति प्रधानसाधारण्यान्न प्रत्यात्मं सुखदुःखोपभोगस्य नियामकमुपपद्यते । काणादानामपि पूर्ववत्साधारणेनात्ममनःसंयोगेन निर्वर्तितस्यादृष्टस्याप्यस्यैवात्मन इदमदृष्टमिति नियमे हेत्वभावादेष एव दोषः ॥ ५१ ॥

स्यादेतत् । अहमिदं फलं प्राप्नवानीदं परिहराणीत्थं प्रयता इत्थं करवाणीत्येवंविधा अभिसंध्यादयः प्रत्यात्मं प्रवर्तमाना अदृष्टस्यात्मनां च स्वस्वामिभावं नियंस्यन्तीति । नेत्याह—

## अभिसंध्यादिष्वपि चैवम् ॥ ५२ ॥

अभिसंध्यादीनामपि साधारणेनैवात्ममनःसंयोगेन सर्वात्मसंनिधौ क्रियमाणानां नियमहेतुत्वानुपपत्तेरुक्तदोषानुषङ्ग एव ॥ ५२ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

अथोच्येत विभुत्वेऽप्यात्मनः शरीरप्रतिष्ठेन मनसा संयोगः शरीरावच्छिन्न एवात्मप्रदेशे भविष्यति अतः प्रदेशकृता व्यवस्थाऽभिसंध्यादीनाम

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृष्टस्य सुखदुःखयोश्च भविष्यतीति । तदपि नोपपद्यते । कस्मात् । भावात् । विभुत्वाविशेषाद्धि सर्व एवात्मानः सर्वशरीरेष्वन्तः तत्र न वैशेषिकैः शरीरावच्छिन्नोऽप्यात्मनः प्रदेशः कल्पयितुं कल्प्यमानोऽप्ययं निष्प्रदेशस्यात्मनः प्रदेशः काल्पनिकत्वादेव थिकं कार्यं नियन्तुं शक्नोति । शरीरमपि सर्वात्मसंनिधावुत्पन्न वात्मनो नेतरेषामिति न नियन्तुं शक्यम् । प्रदेशविशेषाभ्युपगमे द्वयोरात्मनोः समानसुखदुःखभाजोः कदाचिदेकेनैव तावच्छरीरे गसिद्धिः स्यात् । समानप्रदेशस्यापि द्वयोरात्मनोरदृष्टस्य संभवा थाहि—देवदत्तो यस्मिन्प्रदेशे सुखदुःखमन्वभूत्तस्मात्प्रदेशादप च्छरीरे यज्ञदत्तशरीरे च तं प्रदेशमनुप्राप्ते तस्यापीतरेण समानः खानुभवो दृश्यते स न स्याद्यदि देवदत्तयज्ञदत्तयोः समानप्रदे स्यात् । स्वर्गाद्यनुपभोगप्रसङ्गश्च प्रदेशवादिनः स्यात् । ब्राह्मणादि देशेष्वदृष्टनिष्पत्तेः प्रदेशान्तरवर्तित्वाच्च स्वर्गाद्युपभोगस्य । सर्व पपत्तिश्च बहूनामात्मनां, दृष्टान्ताभावात् । वद तावत्त्वं के बहव नप्रदेशाश्चेति । रूपादय इति चेत् । न । तेषामपि धर्म्यंशेनाभे भेदाच्च । ननु बहूनामात्मनां लक्षणभेदोऽस्ति । अन्त्यविशेषवशा त्तिरितिचेत् । न । भेदकल्पनाय अन्त्यविशेषकल्पनायाश्चेतरेतरा आकाशादीनामपि विभुत्वं ब्रह्मवादिनोऽसिद्धं कार्यत्वाभ्युपगमात् दात्मैकत्वपक्ष एव सर्वदोषाभाव इति सिद्धम् ॥ ५३ ॥ इति श्री न्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ श्रीशारीर साभाष्ये द्वितीयाध्यायस्य तृतीयः पादः समाप्तः ॥ ३ ॥

---

## द्वितीयाध्याये चतुर्थः पादः ।

[ अत्र पादे लिङ्गशरीरश्रुतीनां विरोधपरिहारः ]

### १ प्राणोत्पत्त्यधिकरणम् । सू० १–४

**तथा प्राणाः ॥ १ ॥**

वियदादिविषयः श्रुतिविप्रतिषेधस्तृतीयेन पादेन परिहृतः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

दानीं प्राणविषयः परिहियते । तत्र तावत् 'तत्तेजोऽसृजत' (छान्दो० ६।२।३) इति, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तैत्ति० २।१।१) इति चैवमादिषूत्पत्तिप्रकरणेषु प्राणानामुत्पत्तिर्नाम्नायते क्वचिच्चानुत्पत्तिरेवैषामाम्नायते 'असद्वा इदमग्र आसीत्' (तै० २।७) 'तदाहुः किं तदसदासीदित्यृषयो वाव तेऽग्रेऽसदासीत्। तदाहुः के ते ऋषय इति। प्राणा वाव ऋषयः' इत्यत्र प्रागुत्पत्तेः प्राणानां सद्भावश्रवणात्। अन्यत्र तु प्राणानामप्युत्पत्तिः पठ्यते—'यथाग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' इति, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' (मुण्ड० २।१।३) इति, 'सप्त प्राणाः प्रभवन्ति तस्मात्' (मु० २।१।८) इति, 'स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथवीन्द्रियं मनोऽन्नम्' (प्र० ६।४) इति चैवमादिप्रदेशेषु। तत्र तत्र श्रुतिविप्रतिषेधादन्यतरनिर्धारणकारणानिरूपणाच्चाप्रतिपत्तिः प्राप्नोति। अथवा प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रुतिरिति प्राप्नोति। अत उत्तरमिदं पठति—'तथा प्राणाः' इति। कथं पुनरत्र तथेत्यक्षरानुलोम्यं[२] प्रकृतोपमानाभावात्। सर्वगतात्मबहुत्ववादिदूषणमतीतानन्तरपादान्ते प्रकृतं तत्तावन्नोपमानं संभवति सादृश्याभावात्। सादृश्ये हि सत्युपमानं स्यात्। यथा सिंहस्तथा बलवर्मेति। अदृष्टसाम्यप्रतिपादनार्थमिति यद्युच्येत, यथाऽदृष्टस्य सर्वात्मसंनिधावुत्पद्यमानस्यानियतत्वमेवं प्राणानामपि सर्वात्मनः प्रत्यनियतत्वमिति। तदपि देहानियमेनैवोक्तत्वात्पुनरुक्तं भवेत्। नच जीवेन प्राणा उपमीयेरन्सिद्धान्तविरोधात्। जीवस्य ह्यनुत्पत्तिराख्याता। प्राणानां तूत्पत्तिर्व्याचिख्यासिता। तस्मात्तथेत्यसंबद्धमिव प्रतिभाति। न। उदाहरणोपात्तेनाप्युपमानेन संबन्धोपपत्तेः। अत्र प्राणोत्पत्तिवादिवाक्यजातमुदाहरणम्—'एतस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति' (बृ० २।१।२०) इत्येवंजातीयकम्। तत्र

---

१ प्राणविषयः प्राणोत्पत्तिसंख्यातत्वादिविषयः। २ आनुलोम्यमाञ्जस्यम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यथा लोकादयः परस्माद्ब्रह्मण उत्पद्यन्ते तथा प्राणा अपीत्यर्थः । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः ... विश्वस्य धारिणी' ( मुण्ड० २।१।३ ) इत्येवमादिष्वपि खादिवत् ... सुत्पत्तिरिति द्रष्टव्यम् । अथवा 'पानव्यापच्च तद्वत्' (जै० अ० ३। ...) इत्येवमादिषु व्यवहितोपमानसंबन्धस्याप्याश्रितत्वात् । यथाऽऽदि... पादाद्युक्ता वियदादयः परस्य ब्रह्मणो विकाराः समधिगतास्तथा ... अपि परस्य ब्रह्मणो विकारा इति योजयितव्यम् । कः पुनः ... विकारत्वे हेतुः । श्रुतत्वमेव । ननु केषुचित्प्रदेशेषु न प्राणानामु... श्रूयत इत्युक्तं तदयुक्तम् । प्रदेशान्तरेषु श्रवणात् । नहि क्वचिद... न्यत्र श्रुतं निवारयितुमुत्सहते । तस्माच्छ्रुतत्वाविशेषादाकाशादि... अप्युत्पद्यन्त इति सूक्तम् ॥ १ ॥

## गौण्यसंभवात् ॥ २ ॥

यत्पुनरुक्तं प्रागुत्पत्तेः सद्भावश्रवणाद्गौणी प्राणानामुत्पत्तिश्रु... तत्प्रत्याह—गौण्यसंभवादिति । गौण्या असंभवो गौण्यसं... नहि प्राणानामुत्पत्तिश्रुतिर्गौणी संभवति । प्रतिज्ञाहानिप्रसङ्गात् । ... भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' ( मुण्ड० १।१।३ ) इति ... विज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तत्साधनायेदमाम्नायते—'एतस्मा... प्राणः' ( मुण्ड० २।१।३ ) इत्यादि । सा च प्रतिज्ञा प्राणादेः ... जगतो ब्रह्मविकारत्वे सति प्रकृतिव्यतिरेकेण विकाराभावात्... गौण्यां तु प्राणानामुत्पत्तिश्रुतौ प्रतिज्ञेयं हीयते । तथाच प्रतिज्ञा... संहरति—'पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्' ( मु... १।१० ) इति 'ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' ( मुण्ड० २।२।११ ) ... च । तथा 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं ... दितम्' इत्येवंजातीयकासु श्रुतिष्वेषैव प्रतिज्ञा योजयितव्या । ... प्रागुत्पत्तेः प्राणानां सद्भावश्रवणम् । नैतन्मूलप्रकृतिविषयम् ।

१ यथा तृतीयाध्याये चतुर्थपादेष्वप्रतिग्रहेष्वधिकरणपूर्वपक्षन्यायो ... तोऽपि सोमवमने परामृश्यते तद्वदत्रापि ज्ञेयम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' ( मुण्ड० २।१।२ ) इति मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वावधारणात् । अवान्तरप्रकृतिविषयं त्वेतत्स्वविकारापेक्षं प्रागुत्पत्तेः प्राणानां सद्भावावधारणमिति द्रष्टव्यम् । व्याकृतविषयाणामपि भूयसीनामवस्थानां श्रुतिस्मृत्योः प्रकृतिविकारभावप्रसिद्धेः । वियदधिकरणे हि 'गौण्यसंभवात्' इति पूर्वपक्षसूत्रत्वाद्गौणी जन्मश्रुतिरसंभवादिति व्याख्यातम् । प्रतिज्ञाहान्या च तत्र सिद्धान्तोऽभिहितः । इह तु सिद्धान्तसूत्रत्वाद्गौण्या जन्मश्रुतेरसंभवादिति व्याख्यातम् । तदनुरोधेन त्विहापि गौणी जन्मश्रुतिरसंभवादिति व्याचक्षाणैः प्रतिज्ञाहानिरुपेक्षिता स्यात् ॥ २ ॥

## तत्प्राक्श्रुतेश्च ॥ ३ ॥

इतश्चाकाशादीनामिव प्राणानामपि मुख्यैव जन्मश्रुतिः । यज्जायत इत्येकं जन्मवाचिपदं प्राणेषु प्राक्श्रुतं सदुत्तरेष्वप्याकाशादिष्वनुवर्तते । 'एतस्माज्जायते प्राणः' ( मु० २।१।३ ) इत्यत्राकाशादिषु मुख्यं जन्मेति प्रतिष्ठापितं तत्सामान्यात्प्राणेष्वपि मुख्यमेव जन्म भवितुमर्हति । नह्येकस्मिन्प्रकरण एकस्मिंश्च वाक्य एकः शब्दः सकृदुच्चरितो बहुभिः संबध्यमानः क्वचिन्मुख्यः क्वचिद्गौण इत्यध्यवसातुं शक्यम् । वैरूप्यप्रसङ्गात् । तथा 'स प्राणमसृजत प्राणाच्छ्रद्धाम्' ( प्रश्न० ६।४ ) इत्यत्रापि प्राणेषु श्रुतः सृजतिः परेष्वप्युत्पत्तिमत्सु श्रद्धादिष्वनुषज्यते । यत्रापि पश्चाच्छ्रुत उत्पत्तिवचनः शब्दः पूर्वैः संबध्यते तत्राप्येष एव न्यायः । यथा 'सर्वाणि भूतानि व्युच्चरन्ति' इत्ययमन्ते पठितो व्युच्चरन्तिशब्दः पूर्वैरपि प्राणादिभिः संबध्यते ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

यद्यपि 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इत्येतस्मिन्प्रकरणे प्राणानामुत्पत्तिर्न पठ्यते, तेजोबन्नानामेव च त्रयाणां भूतानामुत्पत्तिश्रवणात् ।

१ वाच इति वाक्प्राणमनसामुपलक्षणम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथापि ब्रह्मप्रकृतिकतेजोबन्नपूर्वकत्वाभिधानाद्वाक्प्राणमनसां त
न्याच्च सर्वेषामेव प्राणानां ब्रह्मप्रभवत्वं सिद्धं भवति । तथाहि—
न्नेव प्रकरणे तेजोबन्नपूर्वकत्वं वाक्प्राणमनसामाम्नायते—'अन्न
सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्' (छा० ६।५।४)
तत्र यदि तावन्मुख्यमेवैषामन्नादिमयत्वं ततो वर्तत एव ब्रह्मप्रभ
अथ भाक्तं तथापि ब्रह्मकर्तृकायां नामरूपव्याक्रियायां श्रवणात्
श्रुतं श्रुतं भवति' (छा० ६।१।३) इति चोपक्रमात् 'ऐतदात्म
सर्वम्' (छा० ६।८।७) इति चोपसंहाराच्छ्रुत्यन्तरप्रसिद्धेश्च ब्र
त्वप्रपञ्चनार्थमेव मनआदीनामन्नादिमयत्ववचनमिति गम्यते । त
प्राणानां ब्रह्मविकारत्वसिद्धिः ॥ ४ ॥

## २ सप्तगत्यधिकरणम् । सू० ५–६

### सप्त गतेर्विशेषितत्वाच्च ॥ ५ ॥

उत्पत्तिविषयः श्रुतिविप्रतिषेधः प्राणानां परिहृतः । संख्यावि
दानीं परिह्रियते । तत्र मुख्यं प्राणमुपरिष्टाद्वक्ष्यति । संप्रति तु
प्राणा इति संप्रधारयति । श्रुतिविप्रतिपत्तेश्चात्र विशयः[1] ।
प्राणाः संकीर्त्यन्ते—'सप्त प्राणाः प्रभवन्ति तस्मात्' (मुण्ड० २
इति । क्वचिच्चाष्टौ प्राणा ग्रहत्वेन[2] गुणेन संकीर्त्यन्ते—'अष्टौ ग्रहा
वतिग्रहाः' (बृ० ३।२।१) इति । क्वचिन्नव—'सप्त वै
प्राणा द्वाववाञ्चौ[3]' (तै० सं० ५।१।७।१) इति । क्वचिद्दश—
पुरुषे प्राणा नाभिर्दशमी' इति । क्वचिदेकादश—'दशेमे पुरु
आत्मैकादशः' (बृ० ३।९।४) इति । क्वचिद्द्वादश—'सर्वेषां
त्वगेकायनम्' (बृ० २।४।११) इत्यत्र । क्वचित्त्रयोदश 'चक्षुश्च
च' (बृ० ४।८) इत्यत्र । एवं हि विप्रतिपन्नाः प्राणेयत्तां प्रति

---

१ विशयः संशयः । २ ग्रहत्वं बन्धकत्वम् । गृह्णन्ति बध्नन्तीति ग्रहा इ
अतिग्रहाः ग्रहानतिक्रान्ता विषया इत्यर्थः । ३ अवाञ्चौ पायूपस्थौ ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGang

किं तावत्प्राप्तम् । सप्तैव प्राणा इति । कुतः । गतेः[1] । यतस्तावन्तोऽवगम्यन्ते—'सप्त प्राणाः प्रभवन्ति तस्मात्' ( मुण्ड० २।१।८ ) इत्येवंविधासु श्रुतिषु । विशेषिताश्चैते 'सप्त वै शीर्षण्याः प्राणाः' इत्यत्र । ननु 'प्राणा गुहाशया[2] निहिताः सप्त सप्त' ( मुण्ड० २।१।८ ) इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान्प्राणान्गमयतीति । नैष दोषः । पुरुषभेदाभिप्रायेयं वीप्सा प्रतिपुरुषं सप्त सप्त प्राणा इति, न तत्त्वभेदाभिप्राया सप्त सप्तान्येऽन्ये प्राणा इति । नन्वष्टत्वादिकापि संख्या प्राणेषूदाहृता कथं सप्तैव स्युः । सत्यमुदाहृता । विरोधात्त्वन्यतमा संख्याध्यवसातव्या । तत्र स्तोककल्पनानुरोधात्सप्तसंख्याध्यवसानम् । वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते ॥ ५ ॥

अत्रोच्यते—

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते—'हस्तो वै ग्रहः स कर्मणाऽतिग्रहेण[3] गृहीतो हस्ताभ्यां हि कर्म करोति' ( बृ० ३।२।८ ) इत्येवमाद्यासु श्रुतिषु । स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभावयितुम् । हीनाधिकसंख्याविप्रतिपत्तौ ह्यधिका संख्या संग्राह्या भवति तस्यां हीनान्तर्भवति नतु हीनायामधिका । अतश्च नैवं मन्तव्यं स्तोककल्पनानुरोधात्सप्तैव प्राणाः स्युरिति । उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः । तथा चोदाहृता श्रुतिः—'दशेमे पुरुषे प्राणा आत्मैकादशः' ( बृ० ३।९।४ ) इति । आत्मशब्देन चात्रान्तःकरणं परिगृह्यते, करणाधिकारात् । नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते । सत्यमुदाहृते । नत्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति यदर्थमधिकं करणं कल्प्येत । शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदास्तदर्थानि पञ्च बुद्धीन्द्रियाणि । वचनादानविहरणोत्सर्गानन्दाः

---

1 गतेः अवगतेः । 2 गुहायां हृदये शेरत इति गुहाशयाः स्वस्थानेषु निहिताः निक्षिप्ताः । 3 कर्मणा हस्तनिर्वर्त्यादानेन गृहीतः संबद्धः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(छा० ६।८।१) इति श्रुतेः । संपत्तिः कैवल्यम्, 'ब्रह्मैव सन्ब्रह्माप्येति' (बृ० ४।४।६) श्रुतेः । तयोरन्यतरामवस्थामपेक्ष्यैतद्विशेषसंज्ञाभाववचनम् । क्वचित्सुषुप्तावस्थामपेक्ष्योच्यते क्वचित्कैवल्यावस्थाम् । कथमवगम्यते यतस्तत्रैवैतदधिकारवशादाविष्कृतम् 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति न प्रेत्य संज्ञाऽस्तीति' (बृ० २।४।१४), 'यत्र त्वस्य सर्वमात्मैवाभूत्' (बृ० २।४।१४), 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति' (बृ० ४।३।१९, माण्डू० ५) इत्यादिश्रुतिभ्यः । सगुणविद्याविपाकावस्थानं त्वेतत्स्वर्गादिवदवस्थान्तरं यत्रैतदैश्वर्यमुपवर्ण्यते । तस्माददोषः ॥ १६ ॥

## ७ जगद्व्यापाराधिकरणम् । सू० १७–२२

### जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ १७ ॥

ये सगुणब्रह्मोपासनात्सहैव मनसेश्वरसायुज्यं व्रजन्ति किं तेषां निरवग्रहमैश्वर्यं भवत्याहोस्वित्सावग्रहमिति संशयः । किं तावत्प्राप्तम् । निरङ्कुशमेवैषामैश्वर्यं भवितुमर्हति 'आप्नोति स्वाराज्यम्' (तै० १।६।२), 'सर्वेऽस्मै देवा बलिमावहन्ति' (तै० १।५।३), 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा० ७।२५।२,८।१।६) इत्यादिश्रुतिभ्य इति । एवं प्राप्ते पठति—जगद्व्यापारवर्जमिति । जगदुत्पत्त्यादिव्यापारं वर्जयित्वाऽन्यदणिमाद्यात्मकमैश्वर्यं मुक्तानां भवितुमर्हति जगद्व्यापारस्तु नित्यसिद्धस्यैवेश्वरस्य । कुतः—तस्य तत्र प्रकृतत्वादसंनिहितत्वाच्चेतरेषाम् । परएव हीश्वरो जगद्व्यापारेऽधिकृतः । तमेव प्रकृत्योत्पत्त्याद्युपदेशात् । नित्यशब्दनिबन्धनत्वाच्च । तदन्वेषणविजिज्ञासनपूर्वकं त्वितरेषामणिमाद्यैश्वर्यं श्रूयते । तेनासंनिहितास्ते जगद्व्यापारे । समनस्कत्वादेव चैतेषामनैकमत्ये कस्यचित्स्थित्यभिप्रायः कस्यचित्संहाराभिप्राय इत्येवं विरोधोऽपि कदाचित्स्यात् । अथ कस्यचित्संकल्पमन्वन्यस्य संकल्प इत्यविरोधः समर्थ्येत ततःपरमेश्वराकूततन्त्रत्वमेवेतरेषामिति व्यवतिष्ठते॥ १७॥

### प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥

अथ यदुक्तम् 'आप्नोति स्वाराज्यम्' (तै० १।६।२) इत्यादिप्रत्-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्चोपदेशान्निरवग्रहमैश्वर्यं विदुषां न्याय्यमिति तत्परिहर्तव्यम्। अत्रोच्यते। नायं दोषः। आधिकारिकमण्डलस्थोक्तेः। अधिकारिको यः सवितृमण्डलादिषु विशेषायतनेष्ववस्थितः पर ईश्वरस्तदायत्तैवेयं स्वाराज्यप्राप्तिरुच्यते। यत्कारणमनन्तरम् 'आप्नोति मनसस्पतिम्' (तै० १।६।२) इत्याह। यो हि सर्वमनसां पतिः पूर्वसिद्ध ईश्वरस्तं प्राप्नोतीत्येतदुक्तं भवति। तदनुसारेणैव चानन्तरम् 'वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिश्च भवति' (तै० १।६।२) इत्याह। एवमन्यत्रापि यथासंभवं नित्यसिद्धेश्वरायत्तमेवेतरेषामैश्वर्यं योजयितव्यम्॥ १८॥

**विकारावर्ति च तथाहि स्थितिमाह ॥ १९ ॥**

विकारावर्त्यपि च नित्यमुक्तं पारमेश्वरं रूपं न केवलं विकारमात्रगोचरं सवितृमण्डलाद्यधिष्ठानम्। तथा ह्यस्य द्विरूपां स्थितिमाहाम्नायः 'तावानस्य महिमा, ततो ज्यायांश्च पुरुषः। पादोऽस्य सर्वा भूतानि, त्रिपादस्यामृतं दिवि' (छा० ३।१२।६) इत्येवमादिः। न च तन्निर्विकारं रूपमितरालम्बनाः प्राप्नुवन्तीति शक्यं वक्तुमतत्क्रतुत्वात्तेषाम्। अतश्च यथैव द्विरूपे परमेश्वरे निर्गुणं रूपमनवाप्य सगुण एवावतिष्ठन्ते एवं सगुणेऽपि निरवग्रहमैश्वर्यमनवाप्य सावग्रह एवावतिष्ठन्त इति द्रष्टव्यम्॥ १९॥

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥**

दर्शयतश्च विकारावर्तित्वं परस्य ज्योतिषः श्रुतिस्मृती। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः' (कठ० ५।१५। श्वेता० ६।१४। मुण्ड० २।२।१०) इति। 'न तद्भासयते सूर्यो न शशाङ्को न पावकः' (गी० १५।६) इति च। तदेवं विकारावर्तित्वं परस्य ज्योतिषः प्रसिद्धमित्यभिप्रायः॥ २०॥

**भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥**

इतश्च न निरङ्कुशं विकारालम्बनानामैश्वर्यं यस्माद्भोगमात्रमेवैषामनादिसिद्धेनेश्वरेण समानमिति श्रूयते—'तमाहापो वै खलु मीयन्ते लोकोऽसौ' इति 'स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवंविदं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized

सर्वाणि भूतान्यवन्ति तेनो एतस्यै देवतायै सायुज्यं सलोकतां जयति' (बृ० १।५।२३) इत्यादिभेदव्यपदेशलिङ्गेभ्यः ॥ २१ ॥

नन्वेवं सति सातिशयत्वादन्तवत्त्वमैश्वर्यस्य स्यात्ततश्चैषामावृत्तिः प्रसज्येतेत्यत उत्तरं भगवान्बादरायण आचार्यः पठति—

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥

नाडीरश्मिसमन्वितेनार्चिरादिपर्वणा देवयानेन पथा ये ब्रह्मलोकं शास्त्रोक्तविशेषणं गच्छन्ति 'यस्मिन्नरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि यस्मिन्नैरंमदीयं सरो यस्मिन्नश्वत्थः सोमसवनो यस्मिन्नपराजिता पूर्ब्रह्मणो यस्मिंश्च प्रभुविमितं हिरण्मयं वेश्म यश्चानेकधा मन्त्रार्थवादादिप्रदेशेषु प्रपञ्च्यते ते तं प्राप्य न चन्द्रलोकादिव भुक्तभोगा आवर्तन्ते। कुतः। 'तयोर्ध्वमायन्नमृतत्वमेति' (छा० ८। ६।६, कठ० ६।१६), 'तेषां न पुनरावृत्तिः' (बृ० ६।२।१५), 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा० ४।१५।६), 'ब्रह्मलोकमभिसंपद्यते' (छा० ८।१५।१), 'न च पुनरावर्तते' (छा० ८।१५।१) इत्यादिशब्देभ्यः। अन्तवत्त्वेऽपि त्वैश्वर्यस्य यथाऽनावृत्तिस्तथा वर्णितम् 'कार्यात्यये तदध्यक्षेण सहातःपरम्' (ब्र० सू० ४।३।१०) इत्यत्र। सम्यग्दर्शनविध्वस्ततमसां तु नित्यसिद्धनिर्वाणपरायणानां सिद्धैवानावृत्तिः तदाश्रयणेनैव हि सगुणशरणानामप्यनावृत्तिसिद्धिरिति। अनावृत्तिः शब्दादनावृत्तिः शब्दादिति सूत्राभ्यासः शास्त्रपरिसमाप्तिं द्योतयति ॥ २२ ॥

इति श्रीमच्छारीरकमीमांसाभाष्ये श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दभगवत्पूज्यपादशिष्यश्रीमच्छंकरभगवत्पूज्यपादकृतौ

चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥

समाप्तमिदं ब्रह्मसूत्रशाङ्करभाष्यम् ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# बादरायणप्रणीतब्रह्मसूत्राणां वर्णानुक्रमः ।





CC-0. Mumukshu Bhawan Varanasi Collection. Digiti...

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized b

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

CC-0. Mumukshu Bhawan Varanasi Collection. Digitiz

समाप्तेयं बादरायणप्रणीतब्रह्मसूत्राणां वर्णक्रमसूची ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## निर्णयसागरेऽङ्कितानि विक्रेयसंस्कृतपुस्तकानि ।



श्रीमच्छंकराचार्यकृतं—

# १ रत्नपञ्चकं (सोपानपञ्चकं) सभाष्यं,

२ विद्वदनुभवानन्दलहरी ( शिवानन्दलहरी ), ३ शतश्लोकीसार-
संग्रहः, ४ कौपीनपञ्चकं, ५ एकोविष्णुरितिपद्यस्य
श्रीनिवासकृतव्याख्यानं.

इति पञ्चानामपूर्वाणां विषयाणां संग्रहः मू. ३ आ., मा. १॥ आ.

कि. रु. आ. ट. रु. आ.

... ० १ ० १

रामगीता रामगीतामाहात्म्यं च. ... ... ...

लघुयोगवासिष्ठः—आत्मसुखकृतः, वासिष्ठचन्द्रिकाटीकासहितः ५ ० १ ०

ललितासहस्रनाम—भास्कररायप्रणीतसौभाग्यभास्कर-
भाष्यसहितं तृतीयं संस्करणम्. ... ... ... १ १२ ० ४

वेदस्तुतिः—( श्रीमद्भागवतगता ) लोकेव्यवायेतिश्लोकः,
जन्माद्यस्येतिश्लोकश्च, काशीनाथोपाध्यायकृतव्याख्योपबृंहित-
श्रीधरीव्याख्या. ... ... ... ... ० १२ ० ४

वेदांतसारः—नृसिंहसरस्वतीस्वामिकृत-सुबोधिन्या, रामतीर्थ-
विरचित-विद्वन्मनोरञ्जनीटीकया, जे. ई. जेकब एतेषा-
माङ्ग्लटिप्पण्या पाठान्तरैश्च समलंकृतः. ... ... १ ४ ० ४

... ... ० ८ ० २

शिवगीता—पत्रबद्धा. ... ... ... ... ० १२ ० २

शिवगीता—कौशेयबद्धा. ... ... ... ० ८ ० २

शिवगीता—लक्ष्मीनरहरिसूनुकृत-बालानंदिनीव्याख्यासहिता. ० १॥ ० १

आशौचनिर्णयः—त्र्यम्बककृतः. ... ... ...

पुरुषार्थचिंतामणिः—श्रीमद्रामकृष्णभट्टसूनुविष्णुभट्टकृतः ... ... २ ८ ० ८
द्वितीयावृत्तिः । ...
विशेषतः ...

CC-0. Mumukshu Bhawan Varanasi Collection. Digiti

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| मनुस्मृतिः—कुल्लूकभट्टकृतमन्वर्थमुक्तावलीव्याख्यासहिता. ... | २ | ८ | ० | ८ |
| याज्ञवल्क्यस्मृतिः—( मिताक्षराव्याख्यासहिता ). ... | २ | ८ | ० | ८ |
| स्मृतिकौस्तुभः—( श्रीमदनंतदेवभट्टकृतः ). ... ... | २ | २ | ० | ८ |
| सनातनमानवधर्मः—मनुस्मृतिगतः ... ... | ० | २ | ० | १ |
| कारिकावली—( सिद्धांतमुक्तावलीसहिता ). ... ... | ० | १० | ० | २ |

# गादाधरीपञ्चलक्षणी ।

## चिन्तामणि-दीधिति-गादाधरी-कृष्णंभट्टीय-न्याय-रत्नेति न्याय-पञ्चग्रन्थीसंग्रहः । सिंहव्याघ्रलक्षणसार्वभौमपरिष्कारोपेतः ।

ह्या न्यायशास्त्राचा मुख्य ग्रंथ इतरांनीं जरी छापलेला आहे तथापि तो आह्मीं पंडितांकडून प्राचीन पुस्तकांवरून शोधवून पाठांतरादिकांनीं अलंकृत करून विद्यार्थ्यांला सुबोध होईल असा छापलेला आहे. किं. १॥ रु. ट. ४ आ.

| | कि. रु. | आ. | ट. रु. | आ. |
|---|---|---|---|---|
| तर्ककौमुदी—लौगाक्षिभास्करकृत. ... ... ... | ० | २ | ० | १ |
| तर्कसंग्रहः—न्यायबोधिनी–पदकृत्यव्याख्याटिप्पणी. ... | ० | ६ | ० | २ |
| तर्कसंग्रहचंद्रिका—( महामहोपाध्याय श्रीमदन्नंभट्टकृत तर्कसंग्रहव्याख्या ) पं० मुकुन्दशर्मकृत. ... ... ... | ० | ६ | ० | २ |
| न्यायलीलावती—श्रीमद्वल्लभाचार्यविरचित. ... ... | ० | १४ | ० | ४ |
| प्रमेयकमलमार्तंडः—( चन्द्रप्रभाचार्यविरचित ). ... | ४ | ० | ० | ८ |
| भास्करोदया—तर्कसंग्रहदीपिकाप्रकाशाची ( नीलकंठीची ) व्याख्या. ... ... ... ... ... | १ | ४ | ० | ४ |
| भाषापरिच्छेदः—मैथिल–मुकुन्दझा–प्रणीतः कारिकावली अर्थदीपिकासहिता. ... ... ... ... | ० | १० | ० | २ |

पाण्डुरङ्ग जावजी,

निर्णयसागराख्यमुद्रणालयाधिपतिः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

